स्यासंगदृष्टृवाचकतयाऽसंगत्वेनलक्ष्यापादनंच तथाचपदसामानाधिकरण्यलभ्यपदार्थाभ्रातमसादेवोमहेश्वरः
र्गादिकर्तृत्वबुद्ध्युपहितत्वयोः परस्परविरोधेनानुपपत्याजहदजहल्लक्षणयातो विरुद्धांशौ विहंभवतीतिश्रुत्यास
णोप्यवस्थात्रयान्वयेनबाधाभावात्सर्वासत्यालंबनत्वात्सद्रूपत्वेनसर्वावस्थासुसर्वावभासकर्त्तानर्थोपशमक
पत्वेननिरतिशयप्रेमास्पदतयानंदरूपत्वेनलक्षणाभेदात्स्वरूपेणाखंडाद्वयानंदत्वंविवक्षितं तद्गोपितु गुरुरू
पुराणे वृत्तेः साक्षितयावृत्तिप्रागभावस्यचस्थितः बुभुत्सायांतथाऽज्ञोस्मीत्याभाताज्ञानवस्तुनः अंतस्यापि.
स्यालंबनत्वेनसत्यः सर्वजडस्यतु साधकत्वेनचिद्रूपःसदाप्रेमास्पदत्वतः आनंदरूपः सर्वार्थसाधकत्वेपंचबा

गुरुर्ब्रह्मागुरुर्विष्णुर्गुरुर्देवोमहेश्वरः गुररेवपरंब्रह्मतस्मैश्रीगुरवेनमः २

नहेतुनासर्वसंबंधवत्वेनसंपूर्णःशिवसंज्ञितः तथाचवेदांतप्रमेयत्वमभिप्रेत्याह वेदांतवेद्यायेति अत्रैवबो
ध्यबोधकसंबंधोपितदैक्यप्रमेयवेदांतप्रमाणयोः स्पष्टीकृतः सच्चिदानंदरूपायेतिशब्देनानंदस्यअक्लि
ष्टान्स्वानुगतानूकरोतीत्यक्लिष्टकर्मेतिव्युत्पत्यासर्वानर्थनिवृत्तेश्चप्रयोजनस्यद्योतनात्तत्कामोधिकारीत्यपि
ध्वनितं १ एवंश्रीदृश्योपसंहारोपरस्त्रीगुरोः सर्ववेदांतप्रमेयप्रत्यगभिन्नब्रह्मकृष्णावतारत्वंनिर्द्धार्यतस्यैव ३
त्रिगुणसंबंधेरूपत्र्दविषयत्वापादगुरुगीतोदितस्मृतिरुपन्यस्यते गुरुर्ब्रह्मेति श्रीगुरुः शुद्धब्रह्मकृष्णा

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्यपक्षेऽकृत्याऽभा [illegible] ासिद्धिः शुक्तिरजतादेश्चचाक्षुषतयादृश्यत्वाभावेन तत्रसाधनवैक
ल्येनव्याप्त्यनुपपत्ये [illegible] मुन्नः किंचचाक्षुषतयादृश्यत्वेनप्रसिद्धस्य घटादेर्लोकेसर्वत्रामिथ्यात्व
प्रसिद्ध्याहेतोर्नसाधारण्यमात्रं किंतुसाध्याभावापादकत्वेनविरुद्धत्वमपिसच्चिदानंदरूपायेत्युक्तश्रुत्या
बाधोजडत्वमुपाधिश्चनचपक्षे साधनव्यापकत्वंतत्रत्वयासाधन स्वीकारेपिजडत्वस्यचिदितिश्रुत्यानिर-
स्तत्वात् एवंरूपोपलक्षितभगवद्गुणानांसच्चिदानंदत्वमापाद्य तद्रासादिकर्मणामपिस्वरूपात्मकत्वमाह
अक्लिष्टकर्मणे इतिलोके प्राकृतसर्वकर्मणामविद्याऽस्मितारागद्वेषाभिनिवेशाख्यपंचक्लेशमूलत्वमेवभ
गवतस्तुनतथात्वं किंतु नक्लिष्टानिपंचाविद्यादिक्लेशसंबंधवंति चिदानंदस्वरूपात्मकान्येवकर्माणियस्य
तस्मै यद्रूपगुणकर्मक इत्यत्र भगवतैव यद्रूपाण्येवगुणकर्म्माणिगुणाः कर्माणिचयस्येति स्वगुणकर्म्मणां-
स्वरूपात्मकत्वापादनात् यद्वा सच्चिदानंदरूपायेत्यनेनस्वरूपलक्षणमुक्त्वा तटस्थलक्षणमाह अक्लिष्ट
र्मणे इतिसदेवसोम्येदमग्रआसीत् एकमेवाद्वितीयंतदैक्षत बहुस्यां प्रजायेयतत्तेजोऽसृजत अथ
हवैनारायणोऽकामयत् प्रजाः सृजेयेति नारायणात्प्राणोजायते मनः सर्वेंद्रियाणिच खंवायुर्ज्योति
पृथिवीविश्वस्यधारिणीत्यादिनेक्षणमात्रसाध्यत्वेनाक्लिष्टान्येवसर्गस्थित्यादिकर्माणियस्यवेदां
भेदायतस्यैव प्रत्यग्रूपत्वमाह बुद्धिसाक्षिणेइति अत्रापिबुद्धिसंबंधोक्त्यात्वंपदवाच्यद्योतनं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गुरु
२

५ नचविमतंरूपंचाक्षुषंरूपत्वात् घटादिरूपवत् तथाविमतंरूपंमिथ्या
जतादिवदितिवाच्यं प्रथमानुमानेरूपत्वंहेतुस्तस्यपरमाणुरूपेसत्वे यंविष्णुः सएवसंहारायतमसादेवोमहेश्वरः
पानैकांतत्वात् नचोद्भूतत्वेनविशेषणाददोषः उद्भूतत्वंरूपस्यचाक्षु गुरवेनमः यद्वा द्वितीयाद्वैभयंभवतीतिश्रुत्यास
आद्येसाध्यावैशेष्येणसंदिग्धासिद्धत्वापत्तेः चाक्षुषत्वेनचाक्षुषत्वसा रतिशोकमात्मविदितिश्रुत्यासर्वानर्थोपशमक
ष्वानीतपार्थिवाप्यतेजो वयवानामुद्भूतगंधस्पर्शवत्वेनमहतांसमवेतरू भूतप्राकृतसुखदातृत्वेननपालकोपितुगुरुरू
किंप्राकृतरूपत्वंहेतुश्चिदानंदरूपत्वंवा नाद्यःस्वरूपासिद्धेर्नापिद्वि वविष्णुः तथामहाप्रलयादौरुद्रोपसंहृतस्यापि
करूपत्वंचोपाधिः नसंदृशेतिष्ठतिरूपमस्यनचक्षुषापश्यति न्नितस्यमुख्योपसंहारकत्वंज्ञानेनसकारणप्रपंचबा
स्तस्मात्पराङ्पश्यतिनांतरात्मन्नित्यादिश्रुत्यासाध्याभाव परं तत्पदंदर्शितंयेनतस्मैश्रीगुरवेनमः ३
रूपस्यापिमिथ्यात्वेनशुक्तिरजतादिवत्ज्ञातमात्रसत्
न्निकर्षासंप्रतिपत्याचाक्षुषत्वासंभवेनदृष्टांतेपिसा परंब्रह्मचगुरुरेवातस्तस्मैनमः २ गुरोःसर्वविलक्षणमहिमानंप्र
दिसर्वव्यवहारोच्छेदेनानुमानविप्लवएवनचोक्त अखंडमंडलाकारमिति अखंडंदेशकालवस्तुपरिच्छेदशून्यमभ
स्वप्नेसर्वसंमतेंद्रियोपसंहारेपिरूपा दस्यान्यानिभूतानिमात्रामुपजीवंतीतिश्रुत्यासर्वान्मंडयतिसुख
त्मनोभगवतस्तदविषयत्वापादने तअनुगृह्णातिचतथाभूतंयदाकारंतथासर्वंचराचरं येनव्याप्तंतदुक्तंभगव
नित्येविष्णौप्रकल्पिताः व्यक्तयोविविधाःसर्वाहाटकेकटकादिवत् भगवत

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रू नचविमतंरूपंचाक्षुषंरूपत्वात् घटादिरूपवत् तथाविमतंरूपंमिथ्या
जतादिवदितिवाच्यं प्रथमानुमानेरूपत्वंहेतुस्तस्यपरमाणुरूपेसत्वेपि दृश्यत्वाभावेन तत्रसाधनवैक
पानैकांतत्वात् नचोद्भूतत्वेनविशेषणाददोषः उद्भूतत्वंरूपस्यचाक्षु दृस्य घटादेर्लोकेसर्वत्रामिथ्यात्व
आद्येसाध्यावैशेष्येणसंदिग्धासिद्धत्वापत्तेः चाक्षुषत्वेनचाक्षुषत्वसा पिसच्चिदानंदरूपायेत्युक्तश्रुत्या
ध्वानीतपार्थिवाप्यतेजो वयवानामुद्भूतगंधस्पर्शवत्वेनमहतांसमवेतरू रेपिजडत्वस्यचिदितिश्रुत्यानिर-
किंप्राकृतरूपत्वंहेतुश्चिदानंदरूपत्वंवा नाद्यःस्वरूपासिद्धेर्नापिद्वि श्वादिकर्मणामपिस्वरूपात्मकत्वमाह
करूपत्वंचोपाधिः नसंदृशेतिष्ठतिरूपमस्यनचक्षुषापश्यति भिनिवेशाख्यपंचक्लेशमूलत्वमेवभ
स्तस्मात्पराङ्पश्यतिनांतरात्मन्नित्यादिश्रुत्यासाध्याभा चिदानंदस्वरूपात्मकान्येवकर्माणियस्य
रूपस्यापिमिथ्यात्वेनशुक्तिरजतादिवत्ज्ञातमात्रसत् णेगुणाः कर्माणिचयस्येतिस्वगुणकर्मणां-
न्निकर्षासंप्रतिपत्याचाक्षुषत्वासंभवेनदृष्टांतेपिसा स्वरूपलक्षणमुक्त्वा तटस्थलक्षणमाह अक्लि
दिसर्वव्यवहारोच्छेदेनानुमानविप्लवएवनचोक्त तदैक्षत बहुस्यां प्रजायेयतत्तेजोऽसृजत अथ
स्वप्नेसर्वसंमतेंद्रियोपसंहारेपिरूपा प्राणोजायते मनः सर्वेंद्रियाणिच खंवायुर्ज्योति
त्मनोभगवतस्तदविषयत्वापादने त्रसाध्यत्वेनाक्लिष्टान्येवसर्गस्थित्यादिकर्माणियस्यवेदां
क्षेणेइति अत्रापिबुद्धिसंबंधोत्तस्यात्वंपदवाच्यद्योतनं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्मकतयासएवसर्गायरजसाब्रह्मासएवसत्वेनपालनायस्वयंविष्णुःसएवसंहारायतमसादेवोमहेश्वरः गुणसंगाविवक्षायांगुरुरेवपरंब्रह्मातःसर्वात्मकत्वात्तस्मैगुरवेनमः यद्वा द्वितीयाद्वैभयंभवतीतिश्रुत्यास र्वानर्थहेतुमिथ्याप्रपंचस्रष्टाचतुर्मुखो नयथावद्ब्रह्मातरति शोकमात्मविदितिश्रुत्यासर्वानर्थोपशमक बोधस्रष्टृत्वाद्गुरुरेवब्रह्माएवंस्वयंविष्णुरपिपालनेमिथ्याभूतप्राकृतसुखदातृत्वेननपालकोपितुगुरुरू पेणनित्यपरिपूर्णानंददातृतयैवमुख्यपालकस्ततोगुरुरेवविष्णुः तथामहाप्रलयादौरुद्रोपसंहृतस्यापि प्रपंचस्यकारणाज्ञानावशेषात् सर्गेपुनरुद्भमश्रवणान्नतस्यमुख्योपसंहारकत्वंज्ञानेनसकारणप्रपंचबा

अखंडमंडलाकारंव्याप्तंयेनचराचरं तत्पदंदर्शितंयेनतस्मैश्रीगुरवेनमः ३

धहेतुत्वाद्गुरुरेवदेवोमहेश्वरस्तद्बोधप्राप्यपरंब्रह्मचगुरुरेवातस्तस्मैनमः २ गुरोःसर्वविलक्षणमहिमानंप्र मापयंत्यन्यागुरुगीतास्मृतिर्लिख्यते अखंडमंडलाकारमिति अखंडंदेशकालवस्तुपरिच्छेदशून्यमभा चतुष्टयाप्रतियोगितयाएतस्यैवानंदस्यान्यानिभूतानिमात्रामुपजीवंतीतिश्रुत्यासर्वान्मंडयतिसुख सत्तास्फूर्तिप्रदानेनलातिअनुगृह्णातिचतथाभूतंयदाकारंतथासर्वंचराचरं येनव्याप्तंतदुक्तंभगव दैः सच्चिदात्मन्यनुस्यूतेनित्येविष्णौप्रकल्पिताः व्यक्तयोविविधाःसर्वाहाटकेकटकादिवत् भगवत

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गुरु ४

तमिदं सर्वंजगदव्यक्तमूर्त्तिनेति एवंव्यापकत्वेन सर्वाव्यवहितं स्वप्रकाशतयानित्यापरोक्षंयत्सा साधनवैक
क्षाद्ब्रह्मतमेवभांतमनुभाति सर्वंतस्यभासासर्वमिदंविभातीत्यादिश्रुतेः यद्विष्णोःपरमंपदंतत्पूर्वं श्ययात्व
प्यविदितंजातंनतंविदाथयइमाजजानान्यद्युष्माकमंतरंबभूवनीहारेणप्रावृताजल्प्याचासुतृपउक्थ त्या
सश्चरंति इत्यादिश्रुतेः तत्पदं कृपालवमात्रेण येनदर्शितंतस्मैअद्भुतमाहात्म्यायगुरवेनमः ३ केनप्रकारे
दर्शितंतदुत्तरत्वेनापिगुरुगीतावाक्यमेवोपन्यस्यते अज्ञानतिमिरांधस्येति अज्ञानमेवतिमिरंयेननित्यस्व

अज्ञानतिमिरांधस्यज्ञानांजनशलाकया चक्षुरुन्मीलितंयेनतस्मैश्रीगुरवेनमः ४
परिपक्वमलायेतानुत्सादनहेतुशक्तिपातेन योजयतिपरेतत्वेसदीक्षयाचार्य्यमूर्त्तिस्थः ५

प्रकाशमपिस्वस्वरूपंनभाति तदुक्तंभगवता अज्ञानेनावृतंज्ञानंतेनमुह्यंतिजंतवइतितेनांधस्यचक्षुर्बुद्धिः ज्ञाय
तेऽनेनेतिज्ञानंवेदांतंतदेवांजनमज्ञानतिमिरबाधकत्वात्तस्यशलाकाउपदेशस्तेनयेनगुरुणाउन्मीलितंप्रकाशि
तंस्वस्वरूपदर्शनयोग्यंसंपादितंदृश्यतेत्वग्र्यया बुद्ध्यासूक्ष्मयासूक्ष्मदर्शिभिरितिश्रुतेः तस्मैश्रीगुरवेनमः ४
हरिरेवगुरुरूपस्तद्रूपः संश्चतत्पदप्रापक इत्यत्रतंत्रवाक्यमपिन्यस्यते परिपक्वमलाइति सपरमेश्वरएवाचा- ४
र्य्यमूर्त्तिस्थःसन् येपरिपक्वमला धर्मेणपापमपनुदतीतिश्रुत्याधर्मांतरानुष्ठानेनपक्वानिगलितप्रायाणिसंनि

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

हितपतनानिमलानियेषांतान् तत्पापोत्सादनहेतुभूतस्वीयशक्तिपातेनादृष्टनिमित्तेनदीक्षयोपदेशेनचदृ
ष्टनिमित्तेनपरेतत्त्वेयोजयति एतेनप्रायश्चित्तादिनापापानांगलितप्रायत्वेपिसर्वथातन्निवृत्तिर्गुरुकृपयातच्छक्ति
पातेनैवेत्यपिध्वनितं तथाचविष्णुरेवगुरुरूपःस्वपदप्रापकश्चतेनैवरूपेणेतिसिद्धं ५ कृष्णास्यभगवतोगु-
रुरूपावतारेतत्प्रतिज्ञापिनिमित्तेतिनिरूप्यते ददामीति सपादेनअहंस्वभक्तेभ्यस्तं बुद्धियोगंददामि येनत
त्वबोधेनते मामुपयांतिमत्स्वरूपमेवप्राप्नुवंतीतिगीतायां यास्वीयाप्रतिज्ञागुरुरूपंविनाबुद्धियोगदानान्नु

ददामिबुद्धियोगंतं येनमामुपयांतिते इतिप्रतिज्ञामाश्रित्यगुरुरूपोबभूवयः ६
सएवनानकगुरुरंगदश्चसएवहि सएवामरदासश्चरामदासःसएवहि ७

पपत्तेस्तांप्रतिज्ञामाश्रित्यतन्निर्वाहाययःकृष्णःस्वयमेवगुरुरूपोबभूव ६ सएवनानकगुरुः तस्यश्रीगुरो
र्विष्णुदशावतारत्ववद्दशरूपत्वमुच्यते अंगदइत्यादिनापद्यत्रयेणनानकनामव्युत्पत्तिस्त्वग्रेमूलेएवभ
व्यास्वीयमंगंभक्त्यागुरवेददातितदीयत्वेननिवेदयतीत्यंगदस्तथाज्ञानभक्त्यंगानिस्वशिष्येभ्यःशरणाग
तेभ्योददातीति वास्थूलदेहवाचकांगशब्दोपलक्षितशरीरत्रयोपाधिंद्यतिअवखंडयति ब्रह्मात्मासा
धेनवाबाधयतीत्यंगदः अमरोविष्णुःसर्वथानित्यविज्ञानमानंदंब्रह्मेत्यादिश्रुत्यामरणशून्यत्वा न

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्यदासइति स्वरूपेणातु अमरोविष्णुरेवंभक्तिरूपेणावतीर्णत्वात् दासश्चेतिवा अमराअन्येदेवाअसाधनवैक
यस्येतिवा नचतस्यविष्णुदासत्वेकथमन्यदेवानांतद्दासत्वमितिवाच्यं तस्यविष्णुस्वरूपत्वेतुदेवानांदासत्व
सूपपन्नमेवतद्भृत्यार्थत्वेपि अहोस्मिनारायणदासदासोदासस्यदासस्यचदासदासः अन्येभ्यईशोजन्यो
तोनराणांतस्माद्दहंधन्यतरोस्मिलोके यःसंपूज्याभिरामंपठतिचहृदयंरामचंद्रस्यभक्त्यायोगींद्रैरप्यलभ्यंप-
दमिहलभतेसर्वदेवैःसपूज्यइत्यादिवचनैरसंभवाभावात् यद्वातमेवविदित्वातिमृत्युमेति मृत्युरस्मादपैती

सएवह्यर्जुनगुरुर्हरिगोविंदनामधृक् हरिरायःसएवाथहरिकृष्णःसएवहि ८

त्यादिश्रुतिस्मृतिवचनैरमरामृत्युशून्यादासाः शिष्यायस्येतिवाऽमरदासः रामामरशब्दयोर्विष्ण्वेकार्थत्वाद्रामदा
सशब्देपिपूर्ववदेवरामस्यदासः स्वरूपेणरामश्चासौभक्तरूपतयादासश्चरामस्वरूपाएवभवंतिदासाउपदेश
गोचराःशिष्यायस्येतिवार्थोबोध्यः ७ अर्जुनशब्दस्तुऋजुवाचीमायादिकापथ्यशून्यशुद्धस्वरूपबोधकः
हरिर्गवावाण्याउपदेशेनविंद्यतेप्राप्यतेयस्यतन्नामधारयतीति हरिगोविंदनामधृक् हरिरेवरायोधनंयस्य ५
अन्यस्यसर्वस्यमृषात्वावधारणात् हरिःसर्वदोषापहारकः कृष्णोनित्यानंदस्वरूपश्चहरिकृष्णः ८

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्यागे एवबहु अत्यर्थमादरोयस्य सत्यागबहादरोऽतएवतद्वाण्यांवैराग्यमेवप्राधान्येननिरूपितंभाति सएवकृष्णावतारभूतोजगतांगुरुर्नानकएवम्लेच्छैरत्यर्थंप्रतिमाभंगादिनाधर्मविरोधेकृतेगोविंदसिंहरूपेण गोविंदोविष्णुरेवम्लेच्छमृगनाशकत्वेनसिंहस्तेनरूपेणधर्मरक्षणतत्परोजातइत्यर्थः ९ तस्यभगवतःश्रीनानकस्यपुत्ररूपेणाचरितमुच्यते नानकइत्यादिद्वाभ्यांयोगंत्यागाश्रमंभगवतियुज्यतेऽनेनेतिभक्तियोगस्तत्प्र

त्यागबहादरोनाम्नासएवजगतांगुरुः गोविंदसिंहरूपेणधर्मरक्षणतत्परः ९
नानकःपुत्ररूपेणश्रीश्रीचंद्रसमारव्यया योगंविस्तारयामासविष्णुभक्तिंसमादिश
न् १० प्रवृत्तिधर्मरक्षार्थंलक्ष्मिचंद्रस्वरूपतः वंशंसंस्थापयामासजगदुद्धारहेतवे ११
सएवद्विजरूपेणभवानीदाससंज्ञया सावित्र्यामांद्विजंचक्रेतस्मैश्रीगुरवेनमः १२

धानंसमादिशन्उपदिशन् १० वंशद्वाराप्युपदेशेनजगदुद्धारहेतवेवंशंसंस्थापयामास ११ स्वस्मिन्नपिस्वरूपचतुष्टयेनकृततदनुग्रहंपद्यचतुष्टयेनवर्ण्यते सएवेत्यादिना द्विजरूपेणब्राह्मणरूपेणसावित्र्यातदुपदेशेन जन्मनाजायतेशूद्रः संस्काराद्द्विजउच्यते इतिस्मृतेः जन्मनाशूद्रमपिमामुपनयनसंस्कारेणद्विजंचक्रेभवंसंसारंजन्ममरणादिकंननयतिदासेष्विति भवानीदासस्तत्संज्ञयेत्यर्थः १२ श्रीरामचंद्रायनमः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

 

यद्दत्तमंत्रजपोद्भूतप्रेमरसनयाहरिर्नथ्यते वशीक्रियतेसहरिनाथस्तत्स्वरूपेणतातमुपदिश्य तद्द्वाराविष्णु मंत्रोपदेशितोमयिकृपांचक्रे तस्मैश्रीगुरवेनमः १३ रामः स्वरूपश्चासौसिंहोमायामजांतत्कार्य्यंचहिनस्तीति सिंहश्चरामसिंहस्तत्स्वरूपेण मह्यंब्रह्मात्मावबोधंदत्तवान् किंकुर्वन् स्वात्मनोगुरुनानकरूपस्य माहात्म्यं ज्ञापयंस्तस्मैतद्रूपिणेश्रीनानकरूपिणेनमः उक्तंचास्माभिरयंनामार्थोरामगीताव्याख्यामंगलाचरणे

हरिनाथस्वरूपेणविष्णुमंत्रोपदेशतः तातद्वाराकृपांचक्रे तस्मैश्रीगुरवेनमः १३ राम
सिंहस्वरूपेणब्रह्मबोधंचदत्तवान् ज्ञापयन्स्वात्ममाहात्म्यंतस्मैतद्रूपिणेनमः १४
ख्यापयन्स्वात्ममाहात्म्यंश्रीसदासुखरूपतः शास्त्रमध्यापयामासतस्मैतद्रूपिणेनमः १५
वेदमार्गप्रवृत्त्यर्थंवेदीरूपेणयोऽभवत् नानकस्तंहरिंवंदे गुरुरूपिणमीश्वरम् १६

रमंतेयोगिनोयस्मिन्मोहरावणहिंसके रामसिंहोजयत्येषकौशल्यानंदवर्द्धनः नराकृतिस्तुयोसिंहोमायाजातज्ज हिंसकः रामसिंहोनृसिंहोमेइष्टःप्रह्लादवर्द्धन इत्यादिश्लोकैः १४ स्वात्मनःश्रीनानकरूपस्यमाहात्म्यंख्यापयन् स्वभृत्यस्यममहृद्याविष्कुर्वन्श्रीमांश्चासौसदानित्यंसुखंयस्मात्तद्रूपतः शास्त्रंश्रुतिशिरोरूपमध्यापयामास ६ तद्रूपिणेश्रीगुरुरूपिणे १५ अधुनाभगवतोवेदीरूपावतारप्रयोजनकथनपूर्वकंप्रणामःक्रियते वेदेति

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

द्वाभ्यां अत्रवेदीतिक्षत्रियवर्णावांतरजातिर्यस्यांश्रीनानकावतारः शेषःस्पष्टं १६ १७ कृष्णावतारच
रितमनूच्यबुद्धशंकराद्यवतारकथनपूर्वकंनानकावतारप्रसंगोवर्ण्यते द्वापरांतेइत्यादिभिः भारावतार
णप्रकारउच्यते हत्वेति स्पष्टासुरान् पूतनाकेशीभौमादीन् क्षत्रियरूपिणः कंसजरासंधशिशुपालादीन् १८
कलावसुराणांनृरूपत्वप्रयोजनमुच्यते ततइति येकृष्णनिहतावशिष्टास्तेबलहीनादेवद्रोहं कर्त्तुमिच्छया

कलौधर्मक्षयंदृष्ट्वा वेदमार्गस्यविप्लवं वेदीरूपोऽभवद्विष्णुः कलावुद्धारहेतवे १७
द्वापरांतेभुवोभारं कृष्णःसम्यगन्यवारयत् हत्वास्पष्टासुरान्कांश्चित्कांश्चित्क्षत्रिय
रूपिणः १८ ततोसुरान्नृरूपेणबलसंपादनायहि यज्ञानुष्ठानमाचेरुर्देवद्रोहचिकी
र्षया १९ विष्णुस्तेषांविमोहायदेवरक्षणहेतवे बुद्धरूपोऽवतीर्याथशास्त्रंचक्रे
विमोहनं २०

बलसंपादनायधर्मविनाबलोत्पत्त्यसंभवान्नृरूपेणमानुषाकारेणयज्ञानुष्ठान
माचेरुः १९ भगवांस्तद्दुरभिप्रायमालक्ष्यधर्मानुष्ठतांनाशस्यानौचित्यमालक्ष्यतद्विमोहायावतीर्य मोहनं
शास्त्रंनिर्ममइत्युच्यते विष्णुरिति तेषामसुराणांकीकटप्रदेशेबोधगयायांबुद्धरूपोवतीर्य विमोहनं वेदवि
मुखीकरणं उक्तंचभागवते बुद्धोनाम्नाजिनसुतः कीकटेषुभविष्यतीति २० श्रीराम

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तेनतन्मोहोनिरूप्यते मोहिताइति तेनपाषंडशास्त्रेणतेषांऋत्विजोध्वर्युसामगादयः किलनिश्चयेन २१ तैर
सुराणामृत्विग्भिः बुद्धरचितशास्त्रकुतर्कैर्लोकानां वंचनात् वेदविमुखीकरणात् जनानामुद्धारहेतवोवेदमार्गाः
कर्मोपासनाज्ञानयोगाख्याः संप्रलोपितालुप्तप्रायाः कृताः २२ ततोभगवतः स्वप्रतिज्ञानुसाराज्ञावशाच्छंक
रावतारोवर्ण्यते यदायदेत्यादि त्रिभिः धर्मस्यग्लानिर्हानिः अभ्युत्थानंवृद्धिः सृजामिआविर्भावयामिनित्यस्यज

मोहितास्तेनतेयज्ञांस्त्यक्त्वापातालमाययुः तदृत्विजस्तुपाषंडशास्त्रंतज्जगृहुःकिल २१
तैस्तुपाषंडशास्त्रोक्तयुक्तिभिर्लोकवंचनात् वेदमार्गाजनोद्धारहेतवःसंप्रलोपिताः २२
यदायदाहिधर्म्मस्यग्लानिर्भवतिभारत अभ्युत्थानमधर्मस्यतदात्मानंसृजाम्यहं २३
परित्राणायसाधूनांविनाशायचदुष्कृतां धर्मसंस्थापनार्थायसंभवामियुगेयुगे २४

न्मासंभवादात्मनात्मसृष्टौआत्माश्रयापाताच्च २३ ननुधर्महानौपापवृद्धौभगवदाविर्भावेस्वधर्मप्रियत्वंभा
ति तथाच विरुद्धमेतदित्याशंक्य तदुत्तरत्वेन भगवान्स्वावतारप्रयोजनमाह परित्राणायेति साधूनांवेदमार्गर-
तानांपरितोवाह्याभ्यंतरासुरेभ्यस्त्राणाय दुष्कृतांवेदविरुद्धाचाराणांविनाशायनतदाचरणंरागद्वेषाभ्यां किंतु
धर्मस्यसम्यक्स्थापनार्थाययुगेयुगेसंभवामीत्युक्त्या वर्णास्त्रयः किलास्यासन् गृह्णतोनुयुगंतनूः शुक्लोरक्त-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्तथापीत इदानीं कृष्णतांगत इतिवचनात् दुर्योधनजन्मपश्चात्प्रादुर्भावाच्च कलावेवकृष्णस्यावतारोबु
द्धकल्क्योर्दशावतारावांतरप्रसिद्धयोश्चतेनचहेतुनानभगवतस्त्रियुगनाम्नप्रसिद्ध्याकलौप्रादुर्भावप्रतिषे
धः किंतुत्रीणियुगानिऐश्वर्यश्रीयशोधर्मज्ञानवैराग्यारव्यानिश्रीहरिगिराजो मोमे शारव्यानिवायस्ये-
त्येवार्थः क्वचित्तथोक्तेस्तुसतिकलिस्वभावपापप्रवृत्तौतदाविष्काराभावपरत्वंमंतव्यं २४ स्वप्रतिज्ञामनु

इतिप्रतिज्ञामास्थायशिवंमत्वात्मरूपिणं तमेवाज्ञापयामासशंकरःसबभूवह २५
चत्वार्यब्दसहस्राणिचत्वार्यब्दशतानिच कलेर्यदागमिष्यंतितदात्रेतापरिग्रहः २६
संन्यासश्चनकर्त्तव्योब्राह्मणेनविपश्चिता इतिस्मृत्यातुसंन्यासकालंमत्वावशेषितं २७

सृत्यस्वावतारस्यैवकर्तव्यत्वेपिशिवस्यस्वाभेदमभिप्रेत्यतमेवाज्ञापयामाससचशंकरारव्याचार्योबभूव
२५ तस्यभगवतश्चरितनिरूपणेआदौस्मृत्यनुसारेणकालावशेषमाज्ञायसंन्यासप्रवृत्तिरुच्यते चत्वार्यब्दस
हस्राणीत्यादिनासार्द्धाभ्यां त्रेतापरिग्रहोऽग्नित्रयाधानमग्निहोत्रादिः संन्यासश्चविपश्चिताब्राह्मणेनकले-
श्चतुःशताधिकचतुःसहस्राब्दात्ययेनकर्तव्यः इतिस्मृत्यनुसारेणसंन्यासकालंतदाऽवशेषितंमत्वाऽवधार्य
२६ २७

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

संन्यासाय गुरूपसदन प्रसंगो वर्ण्यते शुकशिष्यमित्यादि सार्द्धेन इयमत्राख्यायिका श्रीभगवत्पूज्यपादः श्री शंकरो ब्रह्मवर्च्चसकामः पंचमे इति वाक्यानुसारेण २८ बालः पंचवर्ष एवोपनीतः सन् ब्रह्मचर्य्यादेव परिव्रजे दिति श्रुति मनुसृत्य तं स्वबुद्ध्या योग्यतया लक्षितं बदरिकाश्रमस्थ शुकशिष्यं गौडपादं गुरुं स्वयं सर्वज्ञ ईश्वरोपि आचार्य्यान्द्धेव विद्या अनन्यप्रोक्ता गतिरत्र नास्तीत्यादि श्रुत्युक्त मर्य्यादा रक्षार्थं शरणं गतः तेतु पूर्वमेव कलिप्र वेशमालक्ष्य कलिजन दर्शनं न कार्य्यं संन्यासश्च मया कस्मैचिन्न देय इत्यवधार्य गुहां प्रविष्टाः भगवता शंकरेण

वेदमार्गस्थिरक्षार्थं संन्यासं कर्तुमुद्यतः शुकशिष्यं गौडपादं बदर्य्याश्रमसंस्थितं २८
बाल एवोपनीतः संस्तं गुरुं शरणागतः तदाज्ञयैव गोविंदाचार्य्याल्लब्धाश्रमः प्रभुः २९
बौद्धान्दिग्विजये जित्वा वेदमार्गान्यथार्हतः स्थापयामास लोकेऽस्मिन्ब्रह्मविद्यां प्रवर्तयन् ३०

बहिः स्थित्वैव शंकरोहं श्रीमद्दर्शनायागत इत्युक्ते तैर्विष्णुसहस्रनामपुस्तकं बहिर्दत्तं शंकरश्चेद्भवानस्य भाष्यं त्वया कार्य्यं तदा भगवता तद्भाष्यं निर्माय समर्पिते तैर्बहिरागत्य स्वप्रतिज्ञानुसारेण स्वयं संन्यासमदत्वा स्वशिष्याय श्रीमद्गोविंदाचार्य्यायाज्ञा कृता तथा च तदाज्ञयैव प्रभुरपि श्री गोविंदाचार्य्याल्लब्धाश्रमो जातः २९ तदुत्तरं यत्तच्च रितं तत्संक्षिप्योच्यते बौद्धानिति लोकेस्मिन्ब्रह्मविद्यां प्रकर्षेण वर्त्तयन्नन्यान् वेदमार्गान्यथार्हतस्तदंगतया स्थापया मास ३०




CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तत्फलसिद्धिर्ज्ञाप्यते मुख्याधिकारिणइति तथापिसर्वोपकाराभावेनासंतोषनिमित्तंसूच्यते अथापीति क
श्चिद्धीरः प्रत्यगात्मानमैक्षदित्यादिश्रुतेः ३१ ततोभगवदाज्ञयासर्वोपकाराय भक्तिप्रवर्त्तनायावतारांतरा
उच्यंते भक्तिमार्गप्रवृत्त्यर्थमिति तेपिश्रीमद्रामानुजाचार्य्यादिरूपेणावनींपृथिवींभारतवर्षंगताः प्राप्ताः
३२ तेषामाचरितंनिरूप्यते भक्तिमिति पराभक्तेः प्रेमलक्षणायाःसापरानुरक्तिरीश्वरेइतिभगवताशांडिल्ये

मुख्याधिकारिणोब्रह्मबोधेनब्रह्मरूपतां प्रापुरथापिदुर्लभ्यालोकेज्ञानाधिकारिणः ३१
भक्तिमार्गप्रवृत्त्यर्थं कृपयाभगवान्हरिः शेषादीन्पार्षदानाज्ञांचक्रेतेप्यवनींगताः ३२
भक्तिंप्रवर्तयांचक्रुःपरिचर्य्यांक्रियान्वितां ज्ञानाधिकारदौर्लभ्यात्कुर्वंतस्तत्प्रलोपनं ३३
योगास्त्रयोमयाप्रोक्तानृणांश्रेयोविधित्सया ज्ञानंकर्मचभक्तिश्चनोपायोन्योस्तिकर्हिचित् ३४

नसूत्रितायाः फलरूपतयाकृत्यनधीनत्वमेव नवधायामपरायांश्रवणादिरूपायामपिप्राधान्येनपरिचर्य्या
मर्चनरूपामेवप्रवर्त्तयांचक्रुः तस्यादुष्करत्वायविशेष्यते क्रियान्वितामिति किंचिदयोग्याचरितमपिसनि
मित्तंसूच्यते ज्ञानाधिकारदौर्लभ्यादिति ३३ भगवद्वाक्यप्रदर्शनपूर्वकंज्ञानमार्गलोपस्यतदसंमतत्वेना
योग्यताध्वन्यते योगाइत्यादिद्वाभ्यां युज्यंतेमप्येतैरिति योगास्त्रयएवमयानृणामंतःकरणशुद्धौकाम्या

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ज्ञानबाधद्वारास्वस्वस्वरूपप्राप्तिलक्षणपरश्रेयोविधातुमिच्छयाप्रोक्तास्ततसंज्ञामाहुः ज्ञानमित्यादिततदन्यः कर्हिचिदुपायोनास्ति ३४ इतिभगवतैवकांडत्रयस्यापिश्रेयोहेतुत्वस्यबोधनात् ज्ञानमार्गलोपस्तुतैर्विष्णोर संमतएवकृतः ३५ किंच सर्वोपकारकत्वासिद्ध्यापीष्टासिद्धिरित्युच्यते सत्क्रियापरिचर्य्यायामिति तयाप रिचर्य्ययातेनाधिकारदौर्लभ्यहेतुनाऽशक्यो भाव्यतेसंभावनाविषयःक्रियते ३६ संप्रदायपार्थक्य कल्पनेदोषंसंभाव्योपेक्ष्यतेसार्द्धेन एकएवेत्यादिना सनातनोनादिसिद्धस्तंनित्यंनिर्दोषंस्वतःप्रमाण

इतिस्मृत्यात्रिकांडस्यश्रेयोहेतुत्वदर्शनात् ज्ञानमार्गप्रलोपस्तुकृतोविष्णोरसंमतः ३५
सत्क्रियापरिचर्य्यायामधिकारोपिदुर्लभः तयासर्वजनोद्धारस्त्वशक्यस्तेनभाव्यते ३६
एकएवहिवेदोक्तःसंप्रदायःसनातनः तंहित्वातेपृथक्चक्रुःसंप्रदायचतुष्टयं ३७

भूतं हित्वाप्रधानभक्तत्वात्तन्नामभेदैः संप्रदायचतुष्टयंचक्रुः नचश्रीब्रह्मरुद्रसनकाश्चत्वारः संप्रदायिन इतिसंप्रदायभेदस्यानादित्वमितिवाच्यं श्रीमद्भागवतमहाभारतादौपरमभागवतानामंबरीषयुधिष्ठिर भीष्मादीनांसंप्रदायभेदाप्रतीतेः श्रीब्रह्मरुद्रादीनांपुराणादौविरुद्धार्थाभिधायितृत्वादर्शनादेतेषुचसंप्रदा येषुविशिष्टाद्वैतद्वैतादिभेदेनविरुद्धार्थपर्यवसानेनतदेकवाक्यत्वाप्रतीतेश्चतदसंप्रतिपत्तेः ३७



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तथापिसंप्रदायभेददोषकल्पनायामपि तत्कल्पनं दोषायनहिभवति कस्मात्तदुच्यते विष्णुभक्तेः प्रकृष्टत
याविविधप्रकारेणवर्त्तनात् एवमदूषणेपिपरिचर्य्यायाः कर्त्तुमशक्यत्वेनसर्वानुपकारकत्वंतुवर्तते एवेत्युच्य
ते अथापीति ३८ किंच द्वापरेएवपरिचर्य्याप्राधान्यंकलौतुकीर्त्तनस्यैवेति भागवतश्लोकद्वयप्रमाणकरण
पूर्वकमापाद्यतेचतुर्भिः कृतेइत्यादिना कृतेसत्ययुगेविष्णुंध्यायतस्त्रेतायांमखैर्यजतः पुंसः द्वापरे परिच

तथापिनहिदोषायविष्णुभक्तिप्रवर्त्तनात् अथापिदुष्करालोकेपरिचर्याक्रि
यान्विता ३८ कृतेयद्ध्यायतोविष्णुंत्रेतायांयजतोमखैः द्वापरेपरिचर्य्यायांकलौ
तद्धरिकीर्तनात् ३९ कलेर्दोषनिधेराजन्नस्तिह्येकोमहान्गुणः विष्णोःसंकी
र्तनादेवमुक्तबंधःपरंव्रजेत् ४० इत्थंभागवतेविष्णोःकलौनामानुकीर्त्तने
द्वापरेपरिचर्य्यायामधिकारोनिरूपितः ४१ ६ ६

र्य्यांकुर्वतोयत्फलंभवतितत्सर्वंकलौहरिकीर्तनादेवभवति ३९ संकीर्त्तनादेवेत्येव-
कारेणसाधनांतरनैरपेक्ष्यंसंकीर्तनस्यावधारितं ४० इत्थमुक्तप्रकारेणश्रीमद्भागवतेकलौ विष्णो
र्नामानुकीर्तने द्वापरेपरिचर्य्यायांमुख्योधिकारइति निर्णीतः ४१ श्रीराम ६

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तस्माद्भागवतेतथानिर्णयात्परिचर्य्यायाद्वापरेएवप्राधान्यंकलौनतत्प्राधान्यंकिंतुतत्रकलौकीर्तनस्यैव-
प्राधान्यंयुज्यते ४२ तत्रश्रुतिप्रामाण्यमपिप्रदर्श्यते ब्रह्मेति श्रुतावपिब्रह्मनारदसंवादेतथाकलौनाम्नैवस
र्वसिद्धिरितीरितंसचवेदपाठः साक्षाच्छंदोनुरोधेनाक्षरमात्रापरिणामंविनैवात्रग्रंथेतदर्थनिर्णयायश्रोतुः
श्रद्धार्थमीर्य्यते ४३ श्रुतिपाठएवलिख्यते द्वापरांतइति यदर्थंजगामतत्प्रश्नएवोच्यते कथंन्विति ४४

प्राधान्यंपरिचर्य्यायास्तस्माद्वापरएवहि नकलौकीर्तनस्यैवप्राधान्यंतत्रयुज्यते ४२
ब्रह्मनारदसंवादेश्रुतावपितथेरितं सचापिवेदपाठोत्रसाक्षान्निर्णेतुमीर्य्यते ४३
द्वापरांतेनारदोब्रह्माणंप्रतिजगाम कथंनुभगवोगांपर्य्यटन्कलिंसंतरेयमिति ४४
सहोवाच साधुपृष्टोस्मिसर्वश्रुतिरहस्यंगोप्यंतच्छृणुयेनकलिंसंतरिष्यसिभगवतआ
दिविष्णोर्नारायणस्यनाम्नेतिनारदः पुनः पप्रच्छ भगवन्किंतन्नामेतिसहोवाच ४५

ब्रह्मणउत्तरोनिरूप्यते सहोवाचेति साधुपृष्टोस्मीतिप्रश्नस्यसाधुत्वंभगवद्विषयत्वात् तदुक्तंभागवतेवासुदेव
कथाप्रश्नः पुरुषांस्त्रीन्पुनातिहिवक्तारंपृच्छकंश्रोतृंस्तत्पादसलिलंयथेति श्रुतिष्वपिरहस्यमतएवसर्वथागोप्यं १०
रक्षणीयंयत्तच्छृणुयेनपरमतारकेणदुस्तरमपिकलिंसम्यगनायासेनतरिष्यसितदेवाह भगवतइति भग

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शब्देनात्रऐश्वर्यस्यसमग्रस्यधर्मस्ययशसः श्रियः ज्ञानवैराग्ययोश्चैव षण्णाभगइतींगनेति वचनादैश्वर्यादि षट्कंतच्चनित्यनिर्दुःखेपरमानंदघनेतस्मिन्दुःखाभावानंदयोरसाधकत्वेन व्यर्थंतद्भक्तानामेवसुखदुःखा भावापादकत्वेनतत्सार्थक्यंइति तन्नामकीर्त्तनपरस्यसर्वपुमर्थसिद्धिः नित्यप्राप्तत्वेन भगवतः सुलभत्वा याह आदिविष्णोर्नारायणस्येति आदितएवकारणतयाविष्णुव्याप्तावित्यस्माज्ज्ञापकस्यनारंनरसमूहंअ यतेव्याप्नोतिनियमयतिसाक्षितयाप्रकाशयतिचेति तथातस्यनारायणस्त्वं हि सर्व देहिनामात्मास्यधी शोखिललोक साक्षीतिवचनात् तन्नामप्रश्नेसब्रह्माहस्फुटंतन्नामउवाच ४५ हरेइति शरणापन्नजन

हरेराम हरेराम रामराम हरे हरे हरेकृष्ण हरेकृष्ण कृष्णकृष्ण हरे हरे ४६

दुःखतन्मूलपापतन्मूलरागादितन्मूलवासनाहरणात्तथाश्रवणेऽश्रद्धादेर्मननादौ संशयादेः पुनस्तत्व ज्ञानादज्ञानस्यज्ञानिनांमनसश्चहरणात् हरिशब्दाष्टकस्यसार्थक्यं रमंतेयोगिनोऽनंतेनित्यानंदेचिदा त्मनि इतिरामपदेनासौपरंब्रह्माभिधीयतेइति श्रुतौ अत्र नित्यानंदेचिदात्मनियोगिनोरमंतेइत्युक्तं तत्र यो गास्त्रयोमयाप्रोक्तानृणांश्रेयोविधित्सयाज्ञानंकर्मचभक्तिश्चनोपायोन्योस्तिकर्हिचिदित्यादौमुमुक्षुविहि द्भेदेनज्ञानयोगावांतरभेदमवधार्य्यचतुर्विधयोगिनांरमणास्पदत्वेनरामशब्दचतुष्टयसार्थक्यं तत्रापि

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कर्मयोगिनांशंखचक्रधरंविष्णुंद्विभुजंपीतवाससं प्रारंभेकर्मणांविप्रः पुंडरीकाक्षंस्मरेद्धरि मित्यादिकर्मो
द्रावकत्वात् प्रमादात्कुर्वतांकर्मप्रच्यवेताध्वरेषुयत् स्मरणादेवतद्विष्णोः संपूर्णंस्यादितिश्रुतिः यस्यस्मृ
त्याचनामोक्त्यातपोयज्ञक्रियादिषु न्यूनंसंपूर्णतांयातिसद्योवंदेतमच्युत मित्यादिनाकर्मपूर्णताहेतुत्वात्
तत्कर्महरितोषंय दित्यादिनाहरितोषंविनाकर्मस्वरूपत्वालाभात् धर्मःस्वनुष्ठितः पुंसांविष्वक्सेनकथासु
यः नोत्पादयेद्यदिरतिंश्रमएवहिकेवलं कुतः पुनः शश्वदभद्रमीश्वरेनचार्पितंकर्मयदप्यकारण मित्या-
दिनातद्विनावृथाश्रमत्वशश्वदभद्रत्वश्रवणात्कर्ममुख्यफलस्यभावशुद्ध्यादेस्त्वप्यस्तभावाद विशुद्धबुद्ध
यइत्यादिनातद्विनानुपपत्तेः कर्मयोगिनस्तत्ररमंतेभक्तियोगस्यपरापरलक्षणस्यानुरागश्रवणादिरूप
स्यविषयतद्रूपमृतेस्वरूपालाभात्तद्योगिनस्तत्ररमंते एव मुमुक्षवस्तुपूर्वभूमिकृतोपास्तिरुत्तरांभूमिमा
नयेत् वासुदेवेभगवतिभक्तियोगः प्रयोजितः जनयत्याशुवैराग्यंज्ञानंयत्तदहैतुकं यथायथात्मापरि
मृज्यतेसौमत्पुण्यगाथाश्रवणाभिधानैः तथातथापश्यतितत्वसूक्ष्मंज्योतिर्यथैवांजनसंप्रयुक्तं मद्भक्ति
विमुखानांहिशास्त्रगर्तेषुमुह्यतां नज्ञानंनचमोक्षःस्यात्तेषांजन्मशतैरपि यस्यदेवेपराभक्तिर्यथादेवेतथागु
रौ तस्यैतेकथिताह्यर्थाः प्रकाशंतेमहात्मन इत्यादिस्मृतिश्रुतिभ्यांतद्भक्तेरेवज्ञानहेतुत्वात्तत्ररमंतेविद्वांस ११
स्तु तेषांज्ञानीनित्ययुक्तएकभक्तिर्विशिष्यते ज्ञानिनस्त्वहमेवेष्टःस्वार्थोहितुश्चसंमतः स्वर्गश्चैवापवर्गश्च

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नान्योर्थोमहत्तेप्रियः नैर्गुण्यास्थारमंतेस्मगुणानुकथनेहरेः आत्मारामाश्चमुनयोनिर्ग्रंथाअप्युरुक्रमे
कुर्वंत्यहैतुकींभक्तिमित्थंभूतगुणोहरिरित्यादिनातत्ररमंतेइतिविभागः कृष्णपदचतुष्टयंभक्तदुःखकर्षं
कत्वाच्चित्ताकर्षकत्वात् कृषिर्भूवाचकःशब्दइत्यादिनानित्यानंदस्वरूपत्वात् श्यामसुंदरत्वाच्चसार्थकमिति
ज्ञेयं मंत्रेनामावृत्तिःपुनःपुनर्मंत्रावृत्त्युपदेशसूचिकाच ४६ उक्तनाममंत्रस्यपापशोधकत्वंमोक्षप्रदत्वंचाह
द्वाभ्यां इतिषोडशकंनाम्नामित्यादिना कलिकल्मषेत्युक्त्याकलेर्महत्पापनिधित्वात्तत्पापक्षयेकैमुत्यन्यायेन

इतिषोडशकंनाम्नांकलिकल्मषनाशनं नातःपरतरोपायःसर्ववेदेषुदृश्यते ४७ इति
षोडशकंषोडशकलावृतस्यजीवस्यावरणविनाशनं ततःप्रकाशतेपरंब्रह्ममेघापा
येरविरश्मिमंडलमिवेति ४८

सर्वपापनिवर्तकत्वद्योतनंसर्ववेदज्ञोब्रह्मास्यमंत्रस्यसर्वतःश्रैष्ठ्य
माह नात इतिस्याच्चेत् दृश्येतसर्वज्ञस्यापिनदृश्यतेचेन्नास्त्येवेत्यर्थः ४७ इतिनाम्नांषोडशकं अंतःकरण
पंचप्राणदशेंद्रियरूपाषोडशकलास्तदात्मकोलिंगदेहउपलक्षणमेतदविद्यात्मककारणशरीरस्यापितदावृत
स्य यद्वाअविद्यांतःकरणचतुष्टयप्राणदशेंद्रियरूपषोडशकलावृतस्याध्यासापन्नस्यजीवस्यावरणविनाशनं
किंततस्तत्राह ततइति ततआवरणविनाशानंतरंमेघापायेरविरश्मिमंडलमिवपरंब्रह्मस्वयमेवप्रकाशतेस्व

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यंप्रकाशस्यप्रकाशांतरानपेक्षत्वात् ४८ पुनर्नारदप्रश्नोत्तरतयातन्नामकीर्तनस्यनियमांतरनिरपेक्षत्वं भावनातारतम्येनमोक्षफलेप्यवांतरभेदउच्यते नारदइति नास्यविधिरिति नकश्चिच्छौचादिनियमः चक्रायुधस्यनामानिसदासर्वत्रकीर्त्तयेत् नाशौचंकीर्तनेतस्यसपवित्रकरोयतः अपवित्रः पवित्रोवासर्वावस्थांगतोपिवा यःस्मरेत्पुंडरीकाक्षंसबाह्याभ्यंतरःशुचि रित्यादिस्मृतेश्चतथावगमात् ब्रह्मणोविष्णोः भावनामांद्ये

नारदः पुनःपप्रच्छभगवन्कोऽस्यविधिरिति सहोवाचनास्यविधिरिति सर्वदाशुचिरशुचिर्वापठन् ब्रह्मणःसलोकतांसमीपतांसायुज्यमेति ४९ इत्थंवेदेपिबहुशएतदर्थस्यनिर्णयः स्मृतौतंत्रेतिहासादौपुराणेसंहितासुच ५० हरेर्नामैवनामैवनामैवममजीवनं कलौनास्त्येवनास्त्येवनास्त्येवगतिरन्यथा ५१

सतिसलोकतांतन्मध्यमत्वेसमीपतांसम्यक्त्वेसायुज्यमेति यद्यप्येवंतथापितद्धाम्नाविद्याप्रवेशाभावात्तन्निवेशतल्लोकादीनामपिस्वरूपात्मकत्वेनसायुज्यमेवेतिनन्यूनताशंकापीतिमंतव्यं ४९ नाममाहात्म्यस्यसर्वप्रसिद्धत्वमुच्यते इत्थमिति तत्तद्वाक्यानिनाममाहात्म्यादिग्रंथेषुसंगृहीतान्येवात्रविस्तरादुपरम्यते ५० स्मृत्यानाम्नास्त्रिकांडश्रुतिरूपत्वं १२
दर्शयितुंस्मृतिःपठ्यते हरेरिति कलौम्लेच्छाद्याक्रांतत्वेनद्रव्यदेशकालमंत्रपात्रस्यशरीरशुद्ध्यादिसामग्र्यसं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पत्याविघ्नबाहुल्येनाल्पायुषोप्युपद्रुतत्वेन पूर्वकांडोपदिष्टकर्मसंपत्त्यसंभवात्तत्स्थानेनामैवविधत्ते हरेर्नामेति सामग्र्यसंपत्त्यादिभिर्दोषैरेवसत्क्रियायाः परिचर्य्यायाअनुपपत्तेश्चित्तशुद्ध्यैकाग्र्याभावेनोपासनायाअपिदुःसंपाद्यत्वात्तत्प्रतिरूपतयापितदेवविधत्ते नामेति ज्ञानसाधनांतरस्यापितथैवदुःसंपाद्यतयातत्स्थानेपितदेवविधत्ते नामेतिममजीवनंसर्वपुरुषार्थसाधनमित्यर्थः कलौअन्यथागतिरुद्धारप्रकारोनास्त्येव ५१ पठितस्मृत्यर्थनिर्णयोऽभिधीयते इतिस्मृत्यामित्यादिद्वाभ्यां नामैवत्रिकांड

इतिस्मृत्यांत्रिकांडस्यप्रतिरूपतयाकलौ नामैवस्थापितंत्रेधातद्विधानानुकीर्तनात् ५२ त्रेधानामातिरिक्तायागतेःसंप्रतिषेधनात् हरेर्नामविहायान्ययत्नानांव्यर्थतास्मृता ५३ सत्क्रियापरिचर्य्यायादुष्करत्वंकलौखलु पश्यन्नामप्रचारार्थंनानकोऽवततारह ५४

प्रतिरूपतयास्थापितमिति प्रतिज्ञायांहेतुनिर्दिश्यते तद्विधानस्यत्रेधानुकीर्तनादन्यथैवंपुनरुक्तिर्नस्यात् ५२ स्मृत्युत्तरार्द्धाभिप्रायोनिर्दिश्यते त्रेधेति नामातिरिक्तायागतेस्त्रेधानिषेधात्त्रिकांडोक्ततत्तत्साधनपूर्तिहेतुहरिनामान्नुच्चार्यान्यप्रयत्नानांवैयर्थ्यंद्योतितं ५३ एवमुपोद्घातंनिरूप्यसनिमित्तनानकावतारउच्यते सत्क्रियेति अवततारेतिहरिर्नानकरूपेणप्रादुर्बभूव ५४

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तदीयचरितमुच्यते विष्णुरिति त्रिकांडमदूषयन् यथाधिकारंतद्व्यवस्थांस्वीकुर्वन्नेवजनेषुनामोच्चारण-माहात्म्यमुपादिशत् वर्णयामास प्रभुः सर्ववैदिकमर्य्यादारक्षणसमर्थः ५५, एकादशेभगवद्वर्णितस्त्रि-कांडाधिकारोभगवत्पद्याभ्यामेवोच्यते निर्विण्णानामिति निर्विण्णानांविरक्तानांविरागद्योतकमाह कर्म-सन्यासिनामिति अत्रन्यासोद्विविधः आश्रमरूपोजन्मापादककर्मफलत्यागात्मकश्च त्यक्त्वाकर्मफला

विष्णुर्नानिकरूपेणत्रिकांडंचाप्यदूषयन् नामकीर्तनप्राधान्यंजनेषूपादिशत्प्रभुः ५५
निर्विण्णानांज्ञानयोगोन्यासिनामिहकर्मसु तेष्वनिर्विण्णचित्तानांकर्मयोगस्तुकामिनां
५६ यदृच्छयामत्कथादौजातश्रद्धस्तुयःपुमान् ननिर्विण्णोनातिसक्तोभक्तियोगोऽस्य
सिद्धिदः ५७ इतिभगवतादिष्टाधिकारोयस्ययत्रवै तत्रप्रवर्ततांसोपितथापितत्प्रपूर्तये ५८

संगंकार्यंकर्मकरोतियः ससंन्यासीचयोगीच ननिरग्निर्नचाक्रिय इत्यादिस्मृतेः कर्मयोगाधिकारमाह तेष्विति अनिर्वेदद्योतकमाह कामिनामिति ५६ भक्तियोगाधिकारिणमाह यदृच्छयेति पूर्वपुण्यादृष्टवशात् मत्कथा श्रवणकीर्तनादौयोजातश्रद्धः पुमान् तस्यभक्तियोगः सिद्धिदोभवतीत्यधिकारिणंनिरूप्यतंपूर्वाधिकारिव्द्य-व्यावृत्त्यैविशिनष्टिननिर्विण्णोनातिसक्तइति ५७ इत्येवमधिकारंनिरूप्ययथाधिकारंतत्प्रवृत्तिमनु



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जानतापिस्मृतिप्रमाणपूर्वकंतेषामपिनामकीर्तनस्यावश्यकत्वमुच्यते इतिभगवतेत्यादिचतुर्भिः इ
त्येवंभगवतोपदिष्टोधिकारोयस्यपुरुषस्य यत्रज्ञानेकर्मणिभक्तियोगेवास्तिसपुरुषस्तत्रप्रवृत्तिंकरो
त्वित्यनुज्ञायांनामकीर्तनस्यसर्वान्प्रत्यावश्यकत्वंनस्यादित्याशंक्योच्यते तत्सपूर्तय
इतितस्यस्वानुष्ठेययोगस्यपूर्णतार्थं इतिस्मृत्यनुसारेणसर्वेषांतत्तद्योगिनांनामकीर्तनमावश्यकमि

प्रमादात्कुर्वतांकर्मप्रच्यवेताध्वरेषुयत् स्मरणादेवतद्विष्णोःसंपूर्णस्या
दितिश्रुतिः ५९ यस्यस्मृत्याचनामोक्त्यातपोयज्ञक्रियादिषु न्यूनंसंपूर्णतांया
तिसद्योवंदेतमच्युतम् ६० इतिस्मृत्यनुसारेणसर्वेषांनामकीर्तनं आ
वश्यकंस्वस्वयोगसिद्ध्यर्थमितिनिर्णयः ६१

तितूर्य्येणान्वयः स्वस्वयोग
सिद्ध्यर्थमिति तत्रतत्सपूर्त्तये इत्यस्यैवव्याख्यानम् ५८ तूर्य्येइति स्मृतीति शब्दपरामृष्टेस्मृतीप
ठ्येते प्रमादादित्यादिना कर्मकुर्वतांअध्वरेषुप्रमादाद्यत्प्रच्यवेततद्विष्णोःसंस्मरणादेवसंपूर्णंस्यादि
तिश्रुतिर्वेदतात्पर्य्यार्थः ५९ सद्यःसंपूर्णतांयातीत्यन्वयः ६० इतिनिर्णयोनिर्णीतोर्थः ६१

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अत्र स्मरणकीर्तनयोरुभयोः परामर्शात्तयोः स्मरणात्कीर्तनस्योत्कर्षो बोध्यते यद्यपीति कीर्तनस्य वरत्वे स्मृत्यंतरं प्रतिज्ञायते स्मृत्यंतर इति तत्र निमित्तं प्रदर्श्यते सुकरत्वत इति ६२ स्मृतिरेव पठ्यते अजस्रमिति निरंतरमित्यर्थः चित्तैकाग्र्यापेक्षत्वाद्बह्वायासेनेत्युक्तं कीर्तनं तु ओष्ठयोः स्पंदनं चालनं तन्मात्रेण भवत्यतः सुकरतया ततश्चिंतनात्कीर्तनं वरं श्रेष्ठमित्यर्थः ६३ कलिदोषाद्योगत्रयासमर्थानां ततोऽप्य

यद्यपि स्मरणं चात्र कीर्तनं चोदितं द्वयं स्मृत्यंतरे वरं प्रोक्तं कीर्तनं सुकरत्वतः ६२ अजस्रं चिंतनं विष्णोर्बह्वायासेन साध्यते ओष्ठस्पंदनमात्रेण कीर्तनं तु ततो वरं ६३ येषामशक्यास्ते योगास्तेषां तत्स्मृतिरूपतः नाम्नां संकीर्तनं ह्येव कार्य्यं तच्च स्मृतिर्जगौ ६४ यायासाधनसंपत्तिः पुरुषार्थचतुष्टये तयाविनातदाप्नोति नरो नारायणाश्रयः ६५

नायासः सर्वपुमर्थसाधकनामावलंब एव श्रेयानिति दर्श्यते येषामिति तत्र सर्वसाधनप्रतिरूपतया सर्वपुरुषार्थसाधकत्वे स्मृतिप्रमाणं प्रतिज्ञायते तच्चेति ६४ सा स्मृतिरेव लिख्यते यायेति पुरुषार्थचतुष्टये र्थकामधर्ममोक्षेषु यायासाधनसंपत्तिर्नृपसेवाव्यापारकलत्रपुत्रेष्टापूर्तश्रवणमननादिरूपा तयाविनात त्तत्पुमर्थमाप्नोति नारायणाश्रयो नामकीर्तनतत्परो नर इति सामान्योक्त्या न तदाश्रयणो वर्णाश्रमादिविभा



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गइति दर्शितं ६५ तदेवश्रीगुरोःसंमतमित्युच्यते तदेवेति तस्यैवसंमतत्वद्योतकंनिरूप्यते वर्णितमि
ति यतःप्रभुणातेनैवस्ववाण्यांवर्णितम् अन्यदूषणंतुनैवसंमतंवाण्यामनिरूपणात् क्वचिदाभासमात्रं
प्रतीयमानमपिनामप्राधान्यद्योतनार्थमेव नहिनिंदानिंदितुंप्रवृत्ता किंतु विधेयंस्तोतुं इतिन्यायात् किंच
फलवदर्थावबोधकत्वाद्वेदस्यविहितप्रतिषेधेफलासंभवेनविधेयस्तुत्यर्थत्वमेवतच्छ्रवणस्यसर्वत्र ६६

तदेवनामप्राधान्यंविष्णोर्नानकरूपिणः संमतंवर्णितंवाण्यांप्रभुणानान्यदूषणं ६६
अविरुद्धंत्रिकांडेननानकस्यहरेर्मतं शक्तावशक्तौवेदानांसारनामसमाश्रयः ६७ ना
नकस्यावतारेतुसंशयोनैवयुज्यते श्रीमद्भागवतेएवप्रथमेतन्निरूपणात् ६८ अथा
सौयुगसंध्यायांदस्युप्रायेषुराजसु जनिताविष्णुयशसोनाम्नाकल्किर्जगत्पतिः ६९

फलितमुच्यते अविरुद्धमिति नानकस्यहरेर्मतंशक्तौकर्तुंसामर्थ्येसति त्रिकांडेनाविरुद्धंतत्प्रवृत्तौतात्पर्य्यवत्
अशक्तौतुसाधुपृष्टोस्मिसर्वश्रुतिरहस्यमितिश्रुतौब्रह्मणानिर्द्धारणात् सर्ववेदानांसारभूतंयन्नामतत्समा
श्रयएवेष्टः ६७ नानकावतारेसंदिहानान्प्रतिप्रमाणसद्भावात्तदयुक्तत्वमुच्यते नानकस्येति ६८ भागवतप्र
थमस्कंधवाक्यमेवलिख्यते अथासाविति अथबुद्धावतारोत्तरंअसौजगत्पतिः युगसंध्यायांकलिप्रथम

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शतसंख्याभावो दस्युप्रायेषु वर्णाश्रमादिविहितमर्य्यादशून्येषु राजसु जनितागुरुरूपेण प्रादुर्भविष्यतितत्स्वभावजिज्ञासायां विशेषयति विष्णुयशः संबंधितन्निरूपकनाममाहात्म्येन कल्किः तदुक्तकलिदोषहारक इति भावः ६९ श्रीमद्भागवतश्लोक एव व्याख्यायते अथबुद्धावतारस्येत्यादिना युगसंध्यायामित्यस्यार्थो निरूप्यते युगस्यादाविति ७० तद्व्यक्तीकरणार्थैव प्रसंगात्संध्यांशोऽप्युच्यते युगस्यांतइति त

अथबुद्धावतारस्योत्तरंचासौजगत्पतिः युगस्यादौभवेद्योयंकालःसंध्येतिगीयते ७० युगस्यांतेभवेद्यस्तुससंध्यांशःप्रकीर्तितः श्रीमद्भागवतेह्येवनिर्णीतंनात्रसंशयः ७१ कलेर्युगस्यसंध्यायांजनिताभगवान्हरिः प्रोक्तंचतद्भवस्थानं दस्युप्रायेषुराजसु ७२

त्रप्रमाणजिज्ञासायामभिधीयते श्रीमद्भागवतइति तृतीयस्कंधेएकादशाध्यायेमैत्रेयउवाच कृतंत्रेताद्वापरंचकलिश्चेतिचतुर्युगं दिव्यैर्द्वादशभिर्वर्षैःसावधानंनिरूपितं चत्वारित्रीणिद्वेचैकं कृतादिषु यथाक्रमं संख्यातानिसहस्राणि द्विगुणानिशतानिच संध्यासंध्यांशयोरंतर्यःकालःशतसंख्ययोः तमेवाहुर्युगंतज्ज्ञाःयत्रधर्मोविधीयते व्याख्यातंचस्वामिना युगस्यादौसंध्यांतेसंध्यांशः १५
७१ तत्रावतारकालोनिर्धार्यते कलेर्युगस्येति जनिताजनिष्यतेप्रादुर्भविष्यतीतियावत् प्राकट्यस्थानमुच्यते प्रोक्तमिति ७२

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दस्युप्रायशब्दार्थोवर्ण्यते दस्युप्रायाइति राजसुइत्यस्यार्थउच्यते राजानइति ननुसाक्षात्प्रभुः क
थमाचारशून्येष्ववततारेत्याशंकासमाधीयते वेनस्येवेति यथासाक्षाद्धर्म्मविरोधिनोवेनस्यान्य-
थोद्धारमपश्यन् पतितपावनत्वबिरुदपालनायकृपयैवकेवलंअंगजस्यांगजोबभूव तथाजनोद्धा
रायतत्रावतीर्णइतिभावः ७३ अवतारचरितमभिधीयते कर्मोक्तमिति विष्णुयशसोनाम्ना क

दस्युप्रायाःस्ववर्णादिधर्म्माचारेणवर्जिताः राजानःक्षत्रियास्तेषुवेनस्येवपृ
थुर्यथा ७३ कर्मोक्तंविष्णुयशसोनाम्नाकल्किरितिस्फुटं विष्णोर्यशःस्
संबंधिनामतद्गुणवर्णकं ७४ तस्यकीर्तिप्रचारेणसाक्षात्कल्क्यवतारवत्
कलिदोषविनाशेनलोकस्योद्धारकःखलुः ७५

ल्किरितिशब्देन भगवतः कर्मकर्त
व्यचरितमुक्तमित्यन्वयः उक्तशब्दस्यार्थोव्याख्यायनेसार्द्धेन विष्णोरित्यादिना विष्णोर्यशोविष्णुय
शः संबंधसामान्येषष्ठी तथाचतद्यशःसंबंधियन्नाम तस्यकीर्तनप्रचारेण यथाकल्क्यवतारः कलिदोषनि
वारकस्तद्वत् भगवन्नाममहिम्नाकलिदोषविनाशेन खलुध्रुवंजगदुद्धारकइतिभावः तद्गुणवर्णकमिति
नामविशेषणेनविष्णुयशसोनाम्नासंबंधनिरूपणंबोध्यं ७४ ७५ ९ ९

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नन्विदंवाक्यंकल्क्यवतारस्यैवबोधकं किमिति श्रीनानकावतारपरतयाव्याख्यायते इत्याशंक्य तन्निवारयति इदमिति नचेतिनिवारणेहेतुरुच्यते संध्याशब्दप्रयोगतइति ७६ एतस्मिन्पद्येतद्यावर्तयितुंकल्क्यवतारकालोनिर्दिश्यते कलेरिति तत्रसंदेहानास्पदत्वमुच्यते इतिस्थितिरिति तत्कालद्योतकंतद्भविष्यचरितंकथ्यते कलेरंतइति ७७ अयंतुनतथाकिंतुसंध्यायामित्युच्यते अयंत्विति फलितमवधार्य्यते

इदंकल्क्यवतारस्यवाक्यमापादकंभवेत् शंकनीयंनचात्रैवंसंध्याशब्दप्रयोगतः ७६
कलेःसंध्यांशकालेकल्क्यवतारइतिस्थितिः कलेरंतेम्लेच्छगणनाशकःसभविष्यति ७७
अयंतुयुगसंध्यायामवतारःप्रकीर्तितः तस्मान्नानकएवायंनकल्किरितिनिर्णयः ७८
विठ्ठलकृष्णचैतन्यंमन्यंतेकृष्णरूपिणं नैवराजसुतज्जन्मब्राह्मणौतौनसंशयः ७९

तस्मादिति ७८ ननुश्रीवल्लभकुमारःश्रीविठ्ठलस्तथाशचीपुत्रः कृष्णचैतन्यसंज्ञकोमहाप्रभुरितिप्रसिद्धौ द्वावेतौकृष्णावतारत्वेनविदितौ तयोरेवविषयकमेतद्वाक्यंभवतु ननानकविषयमित्याशंक्य तदवतारत्वादूषणपूर्वकमेतद्वाक्यस्यतदविषयत्वेहेतुर्निरूप्यते विठ्ठलमिति अत्रश्रूयमाणंयद्राजसुजन्मतत्तयो नैवयतस्तौब्राह्मणौअतोनतयोरेतद्वाक्यविषयत्वमितिभावः ७९ श्रीराम छ

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नन्वेवंवदताकिंतयोरवतारत्वंनास्वीक्रियते इत्याशंक्यनेत्युच्यते तेषामपीति बहुवचनंतन्महत्वबु
द्ध्याविवादाभावे हेतुरुच्यते यतो हरिरित्यादिना तथाचतयोरप्यवतारत्वमस्तु इति भावः ८० भ-
गवद्वाक्येनतेषांमहानुभावानामवतारोपिसंभाव्यते यद्यदित्यादिद्वाभ्यां यद्यत्सत्वंप्राणिमात्रं वि
भूतिमदित्यैश्वर्यवत्तथा श्रीमच्छोभितं तथोर्जितमुत्कृष्टं तत्सर्वं ममतेजोंशसंभवमेवत्व मवगच्छ म

तेषामप्यवतारेतुनविवादोयतोहरिः नानारूपेणजीवानांसमुद्धारंकरोत्ययं ८० यद्यद्वि
भूतिमत्सत्वंश्रीमदूर्ज्जितमेववा तत्तदेवावगच्छत्वं ममतेजोंशसंभवं ८१ इतिस्मृ
त्यायदादेशादसंख्याताः समुद्धृताः तेषांविष्णुस्वरूपत्वेविवादोनोचितःसतां ८२ ते
षांसत्यवतारत्वेशंकाकर्तुर्भवेद्ध्रुवं दोषोभगवतोद्रोहान्नरकोपिनसंशयः ८३

दंशमृतेऽन्यत्रैश्वर्य्याद्यसंभवात् ८१ इतिभगवद्वाक्येनोत्कृष्टमात्रस्यतदंशत्वेसंभाव्यमानेयेषामुप
देशादसंख्याताजीवाः संसारात्समुद्धृतास्तेषांसर्वेषांमहानुभावानां विष्णुस्वरूपत्वेसतांविवादोनो
चितः ८२ किंचसंदिग्धेप्यवतारत्वेतदनंगीकारांगीकारयोर्दोषतदभावासंभावनयातदंगीकार्य
मेवेतिनिर्द्धार्य्य तेषांसतीत्यादिसार्द्धेन तेषांभगवदवतारत्वेसति यस्तत्रशंकाकर्त्तातस्यभगवद्द्रोहि

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्वात् ध्रुवमिहापि दोषोऽमुत्रापि नरको भवेदेव अत्र संशयो नैवातो महतामवतारत्वेन लोके कैश्चिदपि संमतानामवतारत्वेन नरकमनिच्छता शंका नैव कार्य्या ८३ तेषामनवतारत्वे विष्ण्ववतारत्वाभावेपि यस्तदंगीकर्त्ता स दोषभाग्न भवति नन्वतद्वति तत्प्रकारकज्ञानवत्वेन भ्रांतत्वात्तदंगीकर्ता दोषभागेवे त्याशंक्य प्रथमानुमाने श्रुतिस्मृतिभ्यां स्वरूपासिद्धिं दर्शयता तत्साध्यहेतुक द्वितीयानुमानेपि स्वरूपासिद्ध्यापत्त्या तत्साध्यदोषभाक्त्वस्याप्यसिद्धिरुच्यते सर्वं वै इत्यादित्रिभिः वेदस्य शासनादित्युक्त्या

तेषां चानवतारत्वेप्यंगीकर्त्ता न दोषभाक् सर्वं वै खल्विदं ब्रह्मेत्येवं वेदस्य शासनात् ८४ खं वायुमग्निं सलिलं महीं च ज्योतींषि सत्वानि दिशो द्रुमादीन् सरित्समुद्रांश्च हरेः शरीरं यत्किंच भूतं प्रणमेदनन्यः ८५

तच्छासनस्य राजशासनवदनुल्लंघ्यत्वं ज्ञापितं ८४ स्मृतिरपि तदर्थसंवादायोच्यते खं वायुमिति खं आकाशं ज्योतींषि ताराणान् सत्वानीत्यन्यांश्च प्राणिनः उक्तं तत्सर्वं हरेः शरीरमिति मत्वा यः प्रणमेत्स एवानन्यः न तु भेदबुद्ध्यान्यतिरस्कर्त्ता सर्वत्र मदवस्थितेरन्यतिरस्कारेपि मत्तिरस्कारापत्तेः स्वव्यवहाराय मर्त्यादिसन्माने मदंगदेवावज्ञायां महद्दोषापत्तेश्च न मदन्यः कश्चिद्विद्यते यस्येत्यनन्य इत्येवमेवानन्यार्थत्वात् ८५ १७

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तत्रचेतनेष्वीशप्रवेशदर्शनपरास्मृतिःपठ्यते ईश्वरइति जीवकलयातद्रूपेणईश्वरोभगवानेवप्रविष्टः तत्सृष्ट्वातदेवानुप्राविशत् अनेनजीवेनात्मनाऽनुप्रविश्य नामरूपेव्याकरवाणीत्यादिश्रुतेः इति कृत्वाअश्वादिप्रणमेत् ८६ इतिश्रुतिस्मृतिभ्यांसर्वस्यसामान्येनविष्णुरूपत्वंदर्शयित्वा वैष्णवानांविशेषदर्शनपूर्वकमाचार्य्याणांकैमुत्यन्यायेनतद्रूपत्वा त्तत्रविष्णुस्वरूपत्वज्ञातुः सर्वथादोषशंकाभावोबो

ईश्वरोजीवकलयाप्रविष्टोभगवानिति प्रणमेद्दंडवद्भूमावाश्वचांडालगोखरं ८६
इतिस्मृत्यातुसर्वस्यविष्णुरूपत्वकीर्तनात् विष्णुवैष्णवयोर्नैवमनाकुभेदोविशेषतः ८७ तत्रापिवैष्णवाचार्य्याःसाक्षाद्विष्णुस्वरूपिणः तेषांविष्णुस्वरूपत्वज्ञातुर्दोषःकथंभवेत् ८८ वेदाविरुद्धेसर्वेषांवाक्येप्रामाण्यमिष्यतां अप्रमाणंतद्विरुद्धं बुद्धवाक्यमिवध्रुवं ८९

ध्यते विष्णुवैष्णवयोरित्यादिसार्द्धेन मनाकुकिंचिदपीत्यर्थः ८७
८८ नन्वेवंसर्वेषामाचार्य्याणामवतारत्वस्वीकारेतद्वचसां प्रामाण्यस्वीकारापत्तिः तेषांमिथोविरुद्धतत्वनिरूपकत्वदर्शनात्क्रियायां क्वचिद्विकल्पसंभवेपि वस्तुतत्वेविकल्पासंभवात्कथं वस्तुयाथात्म्यनिर्णयइत्यपेक्षायां वेदस्यैवस्वतः प्रमाणत्वेनान्यवाक्यप्रामाण्याप्रामाण्ययोस्तदनुसारित्वविरुद्धत्व

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रयुक्तत्वान्नैवमितिसमाधीयते वेदाविरुद्धइति ननुकथमीश्वरवाक्यमप्रमाणंतत्र दृष्टांतमुच्यते बुद्धवाक्यमिवेति ८९ श्रीनानकावतारस्यस्वसंप्रदायाप्रसिद्धत्वमाशंक्यपराक्रियते नानकस्येति शंकानिरासेहेतुरुच्यते गुरुग्रंथेइति संप्रदायेप्रधानभूतोगुरुग्रंथएव तत्रप्रसिद्धेः सर्वतोऽधिकप्रामाण्यात् ९० नन्वेवंश्रीमद्भागवत गुरुग्रंथप्रसिद्ध भगवदवतारत्वेनतत्संप्रदायिनां तद्वाक्यप्रामाण्यायतदवतारत्वविषयकबहू द्घोषोभाव्यः किमर्थंतथानदृश्यते इत्याकांक्षायांसमाधीयते बुद्धावतारवाक्यं

नानकस्यावतारत्वंनैवतत्संप्रदायिनः वदंत्येवंनशंक्यंवैगुरुग्रंथेप्रकीर्तनात् ९० बु
द्धावतारवाक्यंतुनप्रामाणिकतांगतं वेदार्थवक्तृजीवानांवाक्येप्रामाण्यमिष्यते ९१
वेदस्यैवहिप्रामाण्यंतद्विरोधाविरोधतः अप्रामाण्यप्रमाणत्वेकिंस्वश्लाघाप्रकत्थनात् ९२

त्वित्यादित्रिभिः बुद्धस्यभगवतः प्रसिद्ध दशावतारांतर्गतत्वेपितद्वाक्यं वेदविरुद्धत्वेनैव हेतुनाप्रामाणिकतांनप्राप्तं वेदार्थवक्तृणांतुजीवानामपिवाक्येईश्वरत्वाभावेपि प्रामाण्यंविद्वद्भिः स्वीक्रियते एव ९१ तथाचस्वतः प्रामाण्यंतु वेदस्यैव अन्यवाक्यानांअप्रामाण्यप्रमाणत्वेतद्विरुद्धत्वाविरुद्धत्वप्रयुक्तेएव भगवताजैमिनिनापिपूर्वतंत्रे वेदाविरोधेस्मृतीनामप्यनपेक्षत्वस्याविरोधे मूलश्रुत्यनुमापकत्वस्यांगीकारात् १८

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अवतारत्वप्रयुक्तप्रामाण्याभावे स्वपक्षश्लाघामात्रं तथा प्रकत्थनात्किंन किमपि फलसिद्धिः ९२ इ
सिकृत्वायद्यपिवृन्दैः प्रायशोनावतारत्वकत्थनंक्रियते तथापि सूर्य्यउदितः किंन भाति अपितु भात्येव य
थातथेश्वरप्रादुर्भावः किं ति रोहितोभवति नानकस्यपरमेश्वरत्वं सर्वत्र स्वपक्षीयेषु परपक्षीयेषु च म्ले-
च्छादिपर्य्यंतेषु प्रसिद्ध तत्पादभ्रामणे म्लेच्छैर्भगवद्धामत्वेनसंमतमंदिरभ्रमणदर्शनात् ९३ एवंतदवता
रत्वमापाद्य श्रौतदृष्टांतवैयाकरणकारिकाविशेषप्रामाण्येन निरुक्तमाश्रित्य पारोक्ष्येणोक्तश्रीमद्भागव

इतिस्मकृत्वामनसिनावतारत्वकत्थनं क्रियतेबहुशोवृन्दैः सूर्य्योभात्युदितोनकिं ९३
यथाचतुर्हुतंसंतंचतुर्होतेत्याचक्षते परोक्षेणैवपारोक्ष्यप्रियादेवाइतिश्रुतौ ९४

तवाक्येएव वर्णागमविपर्य्यासाभ्यांतन्नामनिर्देशोपिप्रदर्श्यते यथाचतुर्हुतमित्यादित्रिभिः यथेत्यादि-
साक्षाच्छ्रुतिपाठएव तत्रेयंश्रुतिर्मंत्रव्याख्यानात्मकब्राह्मणरूपामंत्रेचतुर्हुतंवक्तव्यत्वेनस्थितं तत्स्थानेप
रोक्षेणैवचतुर्होताइत्याचक्षते तत्रहेतुमाह यतोदेवाःपारोक्षप्रियाः नचैकत्रैवश्रुतौ तथाभागवतेपंचा-
ध्याय्यां जगौकलंवामदृशांमनोहरमित्यत्र वामदृगिति तत्रशास्त्र ईकारसंज्ञाषष्ठीतु कलमित्यत्र सुखोच्चार-
णार्थोक्तेत् संज्ञकाकारद्वयबाधेन तत्रईकारसंबंधविधानार्था तथाच क्लीमिति कामबीजं जगौइतिदर्शनात्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

 

तथा विषंभुंक्ष्वमहाराजसहामात्यैश्चपुत्रकैः विनाकेनविनानाभ्यांकृष्णाजिनमकंटकमित्यत्र हेमहाराज सहामात्यैः पुत्रकैश्चाकंटकंकृष्णाजिनंभुंक्ष्व किंभूतं विषंषकारशून्यं तथाकेनककारेण नाभ्यांनकाराभ्यां चविना तथाच ककारषकारनकारद्वयत्यागेन कृष्णाजिनमितिशब्देऽवशिष्टं राज्यंभुंक्ष्वेत्यादिवत्परोक्षवा द्प्रयोगबहुलाभाच्चात्रापि नाम्नाकल्किरितिस्थले देवप्रियपारोक्ष्येण नानकोमाकलिरिति विवक्षितं ९४ सोदाहरणवैय्याकरणकारिकासंमतमुच्यते निरुक्तइति वर्णागमोवर्णविपर्य्ययश्चद्वौचापरौ वर्णवि

निरुक्तेपंचविधकेविपर्य्यासागमौमतौ वर्णागमोगवेंद्रादौसिंहेवर्णविपर्य्ययः ९५ त
थैवविष्णुयशसोनाम्नाकल्किरितिस्थले प्रभावाद्विष्णुयशसोनानकोमाकलिःस्मृतः ९६
नाम्नातोमांपृथक्कृत्स्थाप्यनानूशब्देस्यादगागमः कल्केःककारंसंगृह्यनानकेतिमतंबुधैः ९७

कारनाशौ धातोस्तदर्थातिशयेनयोगोस्तदुच्यते पंचविधंनिरुक्तं इतिकारिकायांपंचविधनिरुक्ते विपर्य्या सागमौसंमतौतदुदाहरणमुच्यते वर्णागमइति ९५ उक्तदृष्टांतप्रमाणाभ्यामत्रफलितार्थउच्यते तथैवेति ९६ तत्प्रकारोलिख्यते नाम्नातइत्यादिद्वाभ्यां नाम्नाशब्दात् माशब्दंपृथक्स्थाप्य शिष्टनानूशब्दे यथाग १९ वेंद्रशब्दे गोशब्दस्येंद्रशब्देनसंधौगविंद्र इत्येवस्यान्नगवेंद्रइति तत्रमध्ये अगागमेन तन्निष्पत्तिस्त

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्रापि अगागमेन स्वरहीनस्यनस्यनानेति सस्वरत्वसिद्धिरथ कल्के: ककारं प्रथमं संगृह्य नानशब्दे संयोज्य नानकेतिबुधैः संमतं १७ नाम्नाशब्दान् नानूशब्दपरिग्रहेतु माशब्दः श्लिष्टः ल्किः शब्दस्तु यथासिंहशब्दे वर्णविपर्ययस्तथावर्णविपर्य्ययात् स्वरहीनेककारे अगागमाच्च माकलिर्मतस्तथाच नानकोमाकलिरितिनिष्पन्नः माकलिर्य्यस्मादिति कलिदोषनिवारक इतिभावः १८ नानकशब्दार्थउच्यते अप्राणइतिद्वाभ्यां अन प्राणने इत्यस्मान्न अनः प्राणो विद्यते यस्य प्राणोपलक्षितसर्वोपाधिरहितः अप्राणोह्यमनाःशुभ्रइत्यादि

नाम्नाशिष्टस्तुमाशब्दोल्किःशब्दस्तुविपर्य्ययात् अगागमात्ककारेच नानकोमाकलिर्मतः १८ अप्राणः कः सुखाकारोनानकः परिकीर्तितः नानकंहिसुखंयस्मादविक्रियसुखप्रदः १९ नाचासावनकश्चाथनानकस्तेनसंमतः नविद्यतेअकंदुःखंयस्मादनकएवसः १००

श्रुतेः कः सुखाकारः कंब्रह्म खंब्रह्म नित्यविज्ञानमानंदंब्रह्म आनंदोब्रह्मेति व्यजानात् आनंदमात्रकरपादमुखोदरादिरित्यादिश्रुतिस्मृतिभ्यां नानश्चासौकश्चनानकइतिपरिकीर्तितः व्युत्पत्त्यंतरमुच्यते नानमिति न अनं चलमित्यचलं कंसुखं यस्मादिति नानकइतिव्युत्पाद्य निष्कृष्टार्थःकथ्यते अविक्रियसुखप्रदइति अविक्रियं यत्स्वरूपात्मकं सुखं तत्प्रददातीति तथा १९ अन्याव्युत्पत्तिः प्रदर्श्यते नाचासाविति

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नापुरुषश्चासौ अनकश्चतेनहेतुनानानकसंमतः अनकशब्दस्यैवार्थोव्यपदिश्यते नविद्यतेइतिकंसुखं
तदभावतद्भिन्नतद्विरुद्धेषु नञोविधानात्तद्विरुद्धं अकंदुःखंनविद्यते यस्माद्यत्सेवनेसमूलसर्वदुःखबाधःसो
नकइत्यर्थस्तथाच नाशब्देननरमात्रत्वशंकाव्यावर्तकएवानकशब्दोबोध्यः सर्वथापरमात्माविष्णुरेवनानक
इतिभावः १०० श्रीगुरुनानकस्यभगवदवतारत्वेश्रीगुरुग्रंथांतर्गतकल्ह वाक्यंप्रमाणंदातुमादौरामाद्यवता

चिदात्मनिपरेविष्णौजातेदशरथात्मजे वेदाःप्राचेतसादासन्साक्षाद्रामायणात्मना १०१
यथासाक्षाद्भगवतिजातेकृष्णेबभूवह वेदोभारतरूपेणश्रीभागवतरूपतः १०२
तथानानकरूपेणह्यवतीर्णेजगद्गुरौ वेदावंदिजनाकाराजाताःकल्लादिनामतः १०३

रेवेदाविर्भाववत्तदाविर्भावउच्यते चिदात्मनीत्यादि रमंतेयोगिनोनंतेनित्यानंदेचिदात्मनीत्यादिश्रुत्या-
चिद्विग्रहे विष्णौदशरथात्मजत्वेनप्रादुर्भूते प्राचेतसाद्वाल्मीकेःसकाशाद्वेदाःसाक्षाद्रामायणरूपेणप्रादु-
रासन् १०१ साक्षाद्भगवतीत्यनेनपरशुरामादिवद्भक्तेषु अंशकलाप्रवेशेनावतारत्वंवार्य्यते वेदोभारतरूपेण
श्रीभागवतरूपतश्चबभूवेत्यन्वयः हस्फुटं १०२ तथाजगद्गुरौनारायणेनानकरूपेणावतीर्णे वेदाःकल्लादी
नामतोवंदिजनाकाराजाताः यद्यपियथारामावतारेरामायणस्यकृष्णावतारेचभारतादेर्वेदरूपत्वंतथात्र २०

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

श्रीगुरुग्रंथस्यैव वेदत्वं तथापिग्रंथेकल्क्यादिवाक्यनिवेशदर्शनाद्गुरुमाहात्म्यनिरूपणाय तेषामपिब्रह्मलो
के वेदानांविग्रहत्ववद्विग्रहवद्वेदावतारत्वमित्यंगीकार्य्यं १०३ तेषांकृत्यमुच्यते यथापृथोरिति स्वश्ला
घाश्रवणानौचित्यात् नानकासंमतेपितैः स्ववाग्जन्मनोः साफल्याययशोवर्णितं १०४ कुत्रवर्णितमित्याकां

यथापृथोर्वर्ज्जनेपिवंदिभिर्वर्णितंयशः नानकासंमतेप्येवंवर्णितंतैर्यशःस्फुटं १०४
कल्क्यस्यषष्ठपद्येहि गुरुग्रंथेप्रकीर्तितं कृतेवामनरूपेण त्वयैवबलिवंचनं १०५ कृ
तंतथैवत्रेतायां त्वंरामोरघुवंशजः त्वमेवद्वापरेकृष्णोमुरारिःकंसमोक्षदः १०६
कलौत्वंनानकगुरुरंगदोऽमरएवच इत्याद्यैःसंप्रदायैस्त्वेसिद्धांतस्यावतारता
१०७ जनकत्वप्रसिद्धिस्तुनावतारतयामता जनानांकंसुखंयस्मात्तस्माज्जनक
इष्यते १०८

क्षायांस्थानंनिर्द्दिश्यते कल्क्यस्येति तद्वाक्यार्थएवाभिधीयते सार्द्धाभ्यांकृतेइ
त्यादिना कृतेसत्ययुगेबलिवंचनंकृतमित्युत्तरेणान्वयः १०५ १०६ श्रीनानकस्यैवतावदाविर्भूतरूपद्वय
माह अंगदोमरएवचेति उपसंहरति इत्याद्यैरिति १०७ ननुनानकस्यजनकत्वंप्रसिद्धं कथंकृष्णावतारत्व-
मुच्यते तत्रतत्प्रसिद्धेर्गतिरुच्यते जनकत्वप्रसिद्धिरिति ननुतदनवतारे कथंजनकत्वोक्तिरित्यपेक्षायांव्युत्प

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्यासमाधीयते जनानामिति १०८ अर्थान्नरउच्यते समस्तेति नारायणात्प्राणोजायतेमनः सर्वेंद्रियाणिच खंवा युर्ज्योतिरापश्च पृथिवीविश्वस्यधारिणी नारायणाद्ब्रह्माजायते इत्यारभ्य सर्वाणिचभूतानि नारायणादेवसमु-त्पद्यंते नारायणेप्रलीयंते इत्यंतश्रुतौ तथेरणात् १०९ विपक्षेबाधकउच्यते अन्यथेत्यादित्रिभिः यदाजन

समस्तविश्वजनको यस्माद्ब्रह्मस्वरूपतः तस्मान्नानकोविष्णुर्जनकः कथ्यते नृभिः १०९ अन्यथाजनकस्यैव मनुष्यस्यावतारता यदिस्यान्नैवकलौनग्रंथे विष्णुत्वकीर्तनं ११० कथ्यतेगेयतातस्य कलौनजनकादिभिः ब्रह्मणाथ-शिवेनापितथैवसनकादिभिः १११ एतादृग्वर्णितैश्वर्य्यंनाविष्णोःसंभवेत्खलु तस्मात्तुनानकगुरुर्विष्णुरेवनसंशयः ११२

कस्यैवावतारतास्यात् तदाक लौनगुरुग्रंथे विष्णुत्वकीर्तनं नैवस्यादित्यनुषंगः ११० अनुपपत्यंतरं प्रदर्श्यते कथ्यतेइति कलौनतस्यना नकस्यजनकादिभिः ब्रह्मशिवसनकादिभिश्च गेयताउच्यते १११ एतादृग्यद्वर्णितमैश्वर्य्यंतत् अविष्णो र्विष्णुव्यतिरिक्तस्य खलुनिश्चयेन यतोनसंभवेत्तस्मान्नानकगुरुर्विष्णुरेवेतिभावः ११२



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एवंतदवतारत्वंनिर्णीयतच्चरितैरपितदेवस्पष्टीक्रियते विष्णुरित्यादिना कालूइतिश्रीगुरोः पितुराख्यातद्गृहेवतीर्य्य प्रादुर्भूयनहिविष्णोरन्यथाजनिः संभवति किंतुनिर्द्दोषचैतन्यसुखनित्यांस्विकांतनुं आविर्भावयतेसैवजनिर्विष्णोर्नचापरेतिपुराणवचनात् अथजन्मोत्तरं बाल्यावस्थायामेवस्वावतारतामित्यस्योत्तरेणादर्शयदित्यनेनान्वयः ११३ कैश्चरितैरदर्शयदिति जिज्ञासायामुच्यते शेषाच्छादितशीर्षइति क

विष्णुर्नानकवेद्याख्योवेदमार्गप्रवर्तकः कालूगृहेऽवतीर्य्याथबाल्यएवावतारतां ११३ शेषाच्छादितशीर्षःसन्स्वपन्लोकेह्यदर्शयत् बुलाराख्यस्यराय्स्यम्लेच्छराज्ञोह्यतिस्फुटं ११४ महिषीभिर्भुक्तक्षेत्रसस्यसंपादनादिभिः असंख्यैरीशचरितैः स्वैश्वर्य्यंसमदर्शयत् ११५

चित् श्रीकृष्णलीलावद्गवादिचारणेश्रममिषेणवृक्षछायायांस्वपन् छायाया अन्यत्रगमनेशेषेणभगवताच्छादितशीर्षःसन् एव बुलाराख्यस्य म्लेच्छराज्ञोह्यतिस्फुटंस्वैश्वर्य्यमदर्शयदित्युत्तरेणान्वयः ११४ चरितांतरमुच्यते महिषीभिरिति कदाचिन्महिषीणांचारणेदिवास्वापेताभिर्भुक्तंक्षेत्रस्य तत्स्वामिभिर्म्लेच्छराजाय बुलारसंज्ञकाय तद्वार्तानिवेदनावसरेराज्ञापृष्टोयदैवैतेषांक्षेत्रंबहुसस्यसंपन्नमित्युवाचतदैव तद्बहुतरसस्येन पूर्णंजातमित्यादिभिरसंख्येयैर्जविष्व

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

 

संभवद्भिरीशचरितैः सम्यक् अदर्शयत् ११५ एवंसर्वशक्तित्वंप्रदर्श्य सर्वज्ञत्वबोधकंचरितांतरंनिरूप्यते प्रेषितइति कदाचित्पित्राध्ययनार्थं अक्षरग्रहणायप्रेषितो विभुर्भगवदवतारतयासमर्थः स्वीयसर्वज्ञतां स्वाध्यापकत्वेन पित्रासंमतायज्ञापयन् प्रकटीकुर्वंस्तस्मैसमस्तवेदसारभूतं यद्धरेर्यशस्तस्यत्यक्षराभिप्रायस्य भगवत्पर्य्यवसायित्वंज्ञापयन्प्राह कथयामास ११६ एवंकौमारचरितान्निदर्श्यित्वातदुपसंहारपू

प्रेषितोऽध्ययनार्थंहिस्वीयसर्वज्ञतांविभुः ज्ञापयन्गुरुवेप्राह वेदसारंहरेर्यशः ११६
नृष्वसंभावितान्येवंकुर्वन्कर्म्माणिनित्यशः गार्हस्थ्यमकरोद्वेद प्रवृत्तिपथसिद्धये ११७ श्रीचंद्रलक्ष्मिचंद्राख्यौद्वौपुत्रौसमजीजनत् नानकोहिहरिस्तस्यजाया श्रीस्तत्रसंभवौ ११८

र्वकंकैशोरादिचरितमुच्यते नृष्विति नृषुजीवेषुसंभावयितुमशक्यानिकर्म्माणि नित्यशइति मुहुर्मुहुः कुर्वन् वेदित्वादादौपूर्वकांडवेदनिरूपित प्रवृत्तिपथसिद्धये गार्हस्थ्यंव्यवाहपुत्रजननाद्यकरोत् ११७ तत्पुत्रप्रादुर्भावोनिरूप्यते श्रीचंद्रेति अजीजनत् प्रादुर्भावयामास तन्नामाभिप्रायउच्यते नानकइत्यादौ यतोनानकोहरिरतस्तन्नित्यानुव्रताश्रीस्तज्जायातस्यांप्राच्यांदिशिचंद्रवत्सम्यक् भवतीतिसंभवस्तथाभूतावतः श्रीचंद्रलक्ष्मिचंद्राख्याविति भावः ११८ ✻ ✻ 

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रवृत्तिपथप्रचारोत्तरंश्रीमन्नारायणोपदेशेननिवृत्तिनिरूपणेनानकनारायणयोरभेदे कथंतयोर्गुरुशि
ष्यभावइतिकस्यचित्संभावितशंकामपनेतुंकृष्णचरितंतथाभूतमुदाह्रियते ततइतित्रिभिः यथाब्राह्म
णपुत्रानानेतुंकेशवार्ज्जुनौ लोकालोकमतिक्रम्यगत्वानारायणात्मकं ब्रह्मसाक्षात्‌ददृशतुः ११९ ततस्ते
नश्रीमताभगवतामिथोभेदाभावेपिलीलयायथायुवांमदंशौभूभारमपनेतुंगतौतत्संपाद्यमत्समीपंप्र

ततोयथाब्रह्मसुतानानेतुंकेशवार्ज्जुनौ गत्वाददृशतुःसाक्षाद्ब्रह्मनारायणात्म
कं ११९ युवामदंशौभूभारहरणार्थंभुवंगतौ हत्वायुवाभ्यांभूभारंमत्पार्श्वम
भिगम्यतां १२० आदिष्टौश्रीमतातेनादायाथद्विजबालकान्‌ आगम्यदत्वाविप्रा
यसुतांस्तथैवचक्रतुः १२१ तथाप्रवृत्तिमार्गस्यप्रचारसमनंतरं गतःस्नातुंज
लेनद्याराहूतोहरिणातदा १२२

वद्याभागम्यतां १२० इत्यादिष्टौब्रह्मसुता
नादायतस्मैदत्वा तथैवतदाज्ञसंकृतवंतौ १२१ एवंकृष्णचरितेनारायणाभेदेप्यंशांशीभावमुदाहृत्य तथैव
नानकचरितंनिरूप्यते तथेति कदाचिन्नद्याजलेस्नातुंगतस्तदैवश्रीमन्नारायणेनजलेएवाहूतः १२२

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तत्रगतस्यचरितमुच्यते दृष्ट्वेति नारायणात्मकंब्रह्मतत्रनारायणंनद्यांजलनिवासिनं दृष्ट्वा दिनत्रयंतद्दर्श
नानंदनिर्वृतस्तत्रोषित्वा निवासंकृत्वाऽथतदुत्तरंतदाज्ञापरिवशोऽनिच्छन्नप्यागंतुं पुनर्भूमौ नद्याजला
द्बहिःसमागमत् लोकेनद्यांनष्टोबहुकालोत्तरंप्रकटितइत्याख्यामगात् १२३ विष्णवाज्ञयाऽऽगमनप्र-
योजनं आगमनप्रकारश्चोच्यते निवृत्तीति विष्णूपदेशतस्तदाज्ञयानिवृत्तिमार्गेप्रवर्तयितुं तं विष्णुमेव

दृष्ट्वानारायणंतत्रब्रह्मनारायणात्मकं दिनत्रयमुषित्वाथपुनर्भूमौसमागमत् १२३
निवृत्तिपथसंचारंकर्तुंविष्णूपदेशतः गुरुंतमेवमन्वानोजपन्जप्यंभुवंगतः १२४
यथानभेदःकृष्णस्यविष्णुनात्वेवमेवहि तद्रूपत्वान्नभेदोस्तिनानकस्यापिविष्णुना
१२५ यथालीलाकृतातत्रतदंशांशित्वकीर्तनात् नारायणोगुरुस्तद्वच्छिष्यःश्रीनानकः
खलु १२६

गुरुंमन्वानस्तदुपदिष्टमेव जप्यंजपन्नुच्चारयन् भुवंप्राप्तः १२४ अभेदेपिगुरुशि
ष्यभावोभगवत्कृष्णदृष्टांतेनैवसंभाव्यते यथानेत्यादिद्वाभ्यां नानकस्यविष्णुनाभेदोनास्तितद्रूपत्वा
त्कृष्णवदिति अभेदनिर्देशः १२५ तथापिलीलयागुरुशिष्यभावभेदव्यवहारः सदृष्टांतोनिगद्यते य
थेति विष्णुनानकयोर्गुरुशिष्यभावोलीलयासंभावितः सत्यप्यभेदेभेदवद्भासमानत्वात् कृष्णनारा



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यगयोरंशाशित्वव्यवहारवत् १२६ अथभगवदाज्ञयानानकप्रवृत्तेर्वेदित्वाद्विचारपूर्वकत्वमुच्यते वेद मार्गेति यतोनानकोवेदीरूपेणैवावतीर्णोऽतोवेदापाद्यमेवनिवृत्तेः सत्पथंधिया आलोचयत् विचारमकरोत् १२७ ननुसंन्यासस्यनिवृत्तिसत्पथत्वंप्रसिद्धमेव किंविचारेणेत्याशंक्य तस्यकलौस्मृतिप्रतिषिद्धत्वं प्रदर्श्यते विचारसाफल्याय चत्वारीत्यादिद्विभिः त्रेतापरिग्रहोऽग्नित्रयाधानमग्निहोत्रादिः १२८ वि

वेदमार्गप्रवृत्त्यर्थंवेदीरूपेणनानकः वेदापाद्यंनिवृत्तेःसत्पथमालोचयद्धिया १२७
चत्वार्य्यब्दसहस्राणिचत्वार्य्यब्दशतानिच कलेर्यदागमिष्यंति तदात्रेतापरिग्रहः
१२८ संन्यासश्चनकर्तव्योब्राह्मणेनविपश्चिता अश्वमेधंगवालंभंसंन्यासंपल
पैतृकं १२९ देवराच्चसुतोत्पत्तिःकलौपंचविवर्जयेत् इत्यादिस्मृतिवाक्यैस्तु
संन्यासोवर्जितःकलौ १३०

पश्चिताइति विचारशीलेनेत्यविचारितजन प्रवृत्तिव्यावृत्त्यै ब्राह्मणेनेति मुखजानामयंधर्मोयद्विष्णोर्लिंगधारणं बाहुजातोरुजातानांनायंधर्मः प्रशस्यते इतिस्मृत्यायुगांतरेपिब्राह्मणैकाधिकारकेणतेनसर्वोपकारकत्वासंभवोपिदर्शितः पलपैतृकं मांसपिंडं १२९ मृतेपत्यौदेवरसकाशात्पुत्रोत्पादनं १३० श्रीरामचंद्रायनमः



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नन्वेवंकलौसंन्यासनिषेधेमाभून्निवृत्तिः प्रवृत्तिमार्गेणैवनिःश्रेयसाधिगमोभविष्यतीत्याशंक्य त्यागस्यै
वमोक्षाविर्भावकज्ञानमुख्यसाधनत्वात्तदावश्यकत्वमित्यवधार्य्यते नकर्मणेतिद्वाभ्यां नकर्मादिनाकिंतुए
केमुख्याधिकारिणस्त्यागेनैवामृतत्वंमोक्षं आनशुः प्रापुः नचतमेवविदित्वाति मृत्युमेतीति श्रुति विरोधा
त्कथंज्ञानंविनामोक्षप्राप्तिरितिवाच्यं मोक्षस्यमुक्तिर्हित्वान्यथारूपं स्वरूपेणव्यवस्थितिरिति वचनात्स्व

नकर्मणानप्रजयानधनेनकथंचन त्यागेनैकेऽमृतत्वमानशुरितिश्रुतेर्ध्रुवं १३१ ज्ञा
नद्वारैवमोक्षस्यसाधनंत्यागएवहि प्रधानमितिनिर्णीतंतंविनानान्यथागतिः १३२
इतिनिश्चित्यन्यासेषुसुविचार्यपुनःपुनः न्यासस्याश्रमरूपस्यनिषेधान्नाकरोच्चतम्
१३३ न्यासेविविदिषापूर्वेजन्मापादककर्मणां न्यासंनिराश्रमंदृष्ट्वानिर्दोषंश्रुतिसंमतं १३४

रूपात्मकत्वेननित्यप्राप्तत्वात् ज्ञानंविनातत्प्राप्त्यंतरासंभवात् तत्प्राप्तिर्ज्ञानमेव १३१ त्यागएवज्ञानद्वारैवमो
क्षसाधनं प्रधानमिति विद्वद्भिर्निर्णीतंतस्मात्त्यागंविना न्यथागतिर्नास्ति १३२ इतित्यागस्यसाधनेषुप्राधा
न्यंनिश्चित्य पुनःपुनःसुतरांविचार्य्य आश्रमरूपन्यासस्यकलौनिषेधात्तंनकृतवान् १३३ विविदिषापूर्वे
परमहंससंन्यासेएवजन्मापादककर्मणांन्यासंयतोनिराश्रममाश्रमलिंगशून्यं अतएवनिर्दोषंस्मृतिनि-

२५

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

षेधात्मकदोषरहितं स्मृतीनामाश्रमरूपन्यासनिषेधपरत्वात् तथाश्रुतिसमतं श्रुतिभिस्तत्र प्रतिपादितं १३४ स्वाभिलषितगुणविशेषोनिर्दिश्यते सर्वाधिकारकमिति श्रुतौतथादर्शनप्रमाणीक्रियते मैत्रेयीयाज्ञवल्क्यपत्नीतदादिषुदर्शनात् श्रुतौतथानिरूपणात् सर्वोपनिषदोगावोदोग्धागोपालनंदनः पार्थोवत्सः सुधीर्भोक्तादुग्धंगीताऽमृतंमहत् सर्वशास्त्रमयीगीता इत्यादिवचनैर्गीतायाः सर्वोपनिषत्सारत्वात्तदर्थमवलोक्याथविचारानंतरं तं संन्यासंश्रीकृष्णसंमतंज्ञात्वा १३५ भगवन्निर्द्धारितार्थएवसंगृह्यते

सर्वाधिकारकंन्यासंमैत्रेय्यादिषुदर्शनात् गीतार्थमवलोक्याथज्ञात्वाश्रीकृष्ण
संमतं १३५ सर्वकर्मफलत्यागंजन्मापादककर्मणां त्यागंमत्वाहरेरिष्टं सर्वोन्द्धारक
मेवच १३६

सर्वेति सर्वकर्मणांफलानांत्यागंभवतिसमर्प्पणंकुतः पुनः शश्वदभद्रमीश्वरेनचार्पितंकर्मयदप्यकारणमित्यत्रानर्पितकर्मणांफलत्यागेपि शश्वदभद्रत्वस्मरणात् नच नित्यकर्मणांफलाश्रवणात्सर्वकर्मफलेत्युक्त्यनुपपत्तिरितिवाच्यं अहरहः संध्यामुपासीत् इत्यादौकर्मश्रूयते नतुफलं कर्मणापितृलोकमित्यत्र फलंश्रूयते नतुकर्मविशेषश्रवणं नकुर्यान्निःफलंकर्म इति निष्फलकर्मणोनिषेधश्रवणात्तदनर्हस्य संध्यादेः फलाकांक्षायांफलश्रवणस्यचस्वजनकत्वेन कर्मविशेषाकां-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

क्षायां मृताश्वदग्धरथन्यायेनोभयापेक्षयातन्मेलने नित्यानामपिपितृलोकफलसंभवेनतदुक्तावनुप पत्यभावात् तथाजन्मापादककर्मत्यागंचहरेरिष्टं सर्वोद्धारकंचमत्वा १३६ लोकेप्रचारयामास ननुन हित्यागमात्रेण किंचित्सिद्धिस्तस्य विक्षेपनिरास एवपर्य्यवसानादित्याशंक्य मुख्यंसाधनांतरमुच्यते नामेति नामतत्परत्वेपिनिखिलान् वेदमार्गान्यथाधिकारं स्वीकुर्वन्नेव नतुतान्दूषयन् १३७ गुरुप्रचारि

लोकेप्रचारयामासनामगानैकतत्परं वेदमार्गांस्तुनिखिलान्स्वीकुर्वंस्तानदूष यन् १३७ उदासीनवदासीन इतिस्मृतिप्रणोदितं उदासीनंमतंचक्रेनैवकस्यापि दूषकं १३८ शास्त्रीयधर्मनिरतंवेदांताभिज्ञमद्भुतं शाब्देपरेचनिष्णातंब्रह्मण्यु पसमाश्रयं १३९

तमतस्यसंज्ञाया अपिस्मृतिमूलत्वमित्युच्यते उदासीनेति १३८ गोविं दसिंहरूपेण निवृत्तिप्रवृत्तिमात्रभेदेनरूपद्वयापन्नमतांतर प्रवर्त्तनंसनिमित्तमुच्यते शास्त्रीयेत्यादि सार्द्धत्रिभिः असुराद्विविधा आंतराबाह्याश्च आंतराः कामक्रोधाज्ञानादयो बाह्याम्लेच्छादयस्तत्रानयो र्मताभेदेप्यांतर बाह्यासुरविनाशाय निवृत्तिप्रवृत्तिस्वीकरणमात्र विभागः तत्रांतरासुर विनाशिकाया विद्यायाः स्वोत्पत्तौ सर्वापेक्षाधिकरणे सर्वधर्माकांक्षत्वनिर्देशात् विद्याबहिरंगसाधनसंपन्नत्वमुच्यते २५

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शास्त्रीयधर्मनिरतमिति विद्यांतरंगश्रवणादियुक्तत्वंसूच्यते वेदांताभिज्ञमिति तत्फलंप्रदर्श्यते शाब्दे इति शाब्देपरेचब्रह्मणिनिष्णातं जीवन्मुक्त्युपलक्षणायोच्यते उपशमाश्रयमिति १३९ एवंरूपंनिर्मलाख्यं सन्मार्गकल्मषाणांनिवर्त्तकमकरोत् तथाबाह्यासुररूपम्लेच्छानांसंहारः सद्भिः स्वतः प्रमाणभूतेरप्रामाण्यकारणरहितेवेदेविहितोयोधर्म्मस्तद्रक्षणंचतयोरर्थेसिंहरूपिणं म्लेच्छसंहारकारकपथं गोविंदसिं

निर्मलाख्यंचसन्मार्गमकरोत्कल्मषापहं म्लेच्छसंहारसद्धर्मरक्षार्थेसिंहरूपिणं १४०
म्लेच्छैर्देवप्रतीकानांभंगंसद्धर्मनाशनं दृष्ट्वागोविंदसिंहाख्यरूपेणधर्मरक्षकं १४१
पथंप्रवर्त्तयामासम्लेच्छसंहारकारकं गवांचब्राह्मणानांचरक्षणंनामकीर्त्तनं १४२
म्लेच्छानांनाशनंमुख्यंधर्मंतेभ्यःसमादिशत् सकामधर्मंदेवानामर्च्चनंचप्रवर्त्तयन् १४३

हाख्यरूपेणप्रवर्तयामासेतिद्वितीयेनान्वयः १४० तन्निमित्तमपिप्रदर्श्यते म्लेच्छैरिति देवप्रतीकानांप्रतिमादीनां म्लेच्छकर्तृकंभंगं ब्राह्मणादिसद्धर्माणांबलात्स्वपथेआकर्षणेननाशनंचदृष्ट्वाश्रौतधर्मरक्षकं १४१ तेभ्यउपदिष्टोधर्मोनिरूप्यते गवामित्याद्यर्द्धाभ्यां १४२ सकामधर्माणामपिवैदिकत्वात्त्रिवर्गहेतुत्वाच्चतत्प्रवर्तकत्वमप्युच्यते सकामेत्यर्द्धाभ्यां १४३ ७ ७

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सिंहपथाप्रवृत्तौवैदिकधर्म्मलोपसंभावनंविपक्षेबाधकंप्रदर्श्यते नोचेदित्याद्यर्द्धाभ्यां १४४ बुन्हपाखंड नाशाययथाशंकरस्यप्रवृत्तिस्तथाम्लेच्छोपद्रवनाशायगुरुप्रवृत्तिरित्युच्यते बुन्हेत्यादिसार्द्धेन १४५ १४६ श्रीगु रुमतेवर्णाश्रमधर्माभावशंकामुद्भाव्यनिरस्यते श्रीमदित्यादिद्वाभ्यां श्रीमदिति नानकमार्गविशेषणं-



गोविंदसिंहरूपेणदुर्गांचैवार्चयत्प्रभुः नोचेद्गोविंदसिंहेनसिंहमार्गप्रवर्तनं १४४ लु
प्येद्वैदिकोधर्मोम्लेच्छोपद्रवतःखलु बुन्हपाखंडनाशायशंकरस्यप्रवृत्तिवत् १४५
श्रीमद्गोविंदसिंहेन म्लेच्छनाशनहेतवे श्रौतधर्मस्यत्राणायसिंहवेषःप्रव
र्तितः १४६ श्रीमन्नानकमार्गेतुयःकश्चिच्छंकतेज्ञवत् नैववर्णाश्रमाचा
रोविद्यतेऽस्मिन्कथंचन १४७ साक्षात्प्रकाशमानेपिभास्करेपेचकोयथा
नपश्यतिदिवांधत्वात्तथातस्यप्रभाषणम् १४८ ७

तथाचश्रीमतिमार्गेधर्माभावप्रयुक्त निःश्रीकत्वंयःशंकते तस्यभाषणंदिवांधानांप्रकाशमानेभास्क रेप्रकाशाप्रतीतिवदेवाप्रामाणिकमितिभावः १४७ १४८ श्रीगुरुभ्योनमः ७



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आचार्य्येणधर्मप्रतिषेधेतदभावशंकासंभवेत्तदभावेशंकाबीजमेवनास्तीति वृथाद्रोहमूलाशंकेतिनि रूप्यते नानकेनेति वाण्यांनानकेनक्कचिदपिकस्मिंश्चित्स्थलेपिधर्माचारवर्ज्जनंनैवकृतं येनतद्दर्शनेनकश्चि ज्जनएवंशंकते क्कचिदन्यधर्मेभ्योनामोत्कर्षद्योतनायान्यधर्मन्यूनलोक्तिस्तुनाममाहात्म्यापूर्वतारव्यालिंगे नतत्कीर्तनविधानार्थानान्यधर्मनिषेधार्थेतिभावः १४९ श्रीगुरुमतेकलावुचिताश्रमधर्मप्रवृत्तिराश्रम

नानकेनक्कचिन्नैवधर्म्माचारप्रवर्ज्जनं कृतंवाण्यांयेनकश्चित्तत्रैवंशंकतेजनः १४९ वानप्रस्थस्तथान्यासःकलौशास्त्रेणवर्ज्जितः ब्रह्मचर्य्यंयथाशक्तिक्रियतेहिद्विजातिभिः १५० गार्हस्थ्यंचयथायोग्यंसर्ववर्णेषुदृश्यते केनचिद्भागवशतःप्रमादाच्चकृतंयदि १५१

धर्मविधिप्रतिषेधप्रदर्शनपूर्वकंनिरूप्यते वानप्रस्थइत्यादिसार्द्धेन आश्रमद्वयंतुकलौवर्ज्जितमेव ब्रह्मचर्य्यंतु यथाशक्त्युपनयनकालेऽनुष्ठीयते एव द्विजातिभिरिति त्रैवर्णिकैस्तूर्य्यस्यतुतत्रानधिकारएव १५० गार्हस्थ्यंचसर्वाधिकारकत्वात्सर्ववर्णेषुदृश्यते एवेतिन- श्रीगुरुमतआश्रमधर्म्माभावः केनचित्स्वबुद्धिदोषादन्यथाकरणेनाचार्य्यमार्गेतद्दोषावेशइत्युच्यते केन चिदित्यादिसार्द्धेन स्वधर्मत्यागेलोकेयद्दोषत्रयंकारणंधर्माज्ञानंज्ञातेपितत्रप्रमादो रागद्वेषादिनावि

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ध्याद्युल्लंघनंचतस्यकर्तृबुद्धिगतदोषत्वेनसंप्रदायप्रवर्तके तत्संप्रदायेवानद्दोषासंश्लिष्ट तयातत्रदोषारोपे णपर्य्यनुयोगोऽयोग्यइतिभावः १५१ १५२ कथंतर्ह्याचार्य्यतत्संप्रदाययोरुपालंभार्हतातत्रोच्यते य देति यथोपदेशेधर्म्मवर्ज्जनादेवपर्य्यनुयोगार्हतानान्यथेतिभावः १५३ श्रीनानकपथस्यद्विजातीना माचारःकथ्यते स्वधर्ममिति तत्रधर्मस्यब्राह्मणत्वादिजातिपुरस्कारेणविधेयत्वात्तज्जातिमतास्थूल

स्वात्मनोऽज्ञतयावापिनिजधर्मप्रलोपनं तेनपर्य्यनुयोज्यःस्यान्नैवाचार्य्यःकथं
चन १५२ यदायथोपदेशोहिक्रियतेधर्मवर्ज्जनं तदापर्य्यनुयोज्यःस्यादाचार्योमा
गएववा १५३ स्वधर्मंविष्णुभक्तिंचगुरुभक्तिंयथार्हतः द्विजातयःप्रकुर्वंतिश्रीना
नकमतेस्थिताः १५४ यश्चकश्चिद्ददत्येवंकावासंध्याभवन्मते सतुमूढोन
जानातिवेदिनांमतमुत्तमम् १५५

शरीरेणविष्णुभक्तिंगुरुभक्तिंच सूक्ष्मदेहेन प्रकुर्वंति नचात्रज्ञानानुक्त्यातदस्वीकारभ्रमोयुक्तः ज्ञानस्यप्रमाणैकजन्यस्यकृत्यनधीनतयाप्रकुर्वंतीत्यने नान्वयानुपपत्त्याज्ञानस्य संमतत्वेपितदनुक्तिसंभवात् १५४ संध्यादिप्रश्नमनूद्यसमाधीयते यश्चेति भवन्मतेकासंध्येतियः कश्चिद्ददातिसतुमूढः यतोवेदिनामुत्तमंमतंनजानाति १५५ ७



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वेदिनांमतमेवोच्यते वैदिकीति वैदिकीवेदमंत्रसमूहात्मिकायाअहरहः संध्यामुपासीतेतिद्विजातिभ्यः श्रु-
त्येरितासैवसंध्याभवेत् वेदिभिर्वेदानुयायिभिरन्यानकल्पनीया १५६ द्विजातीनांतत्रयथाधिकाराप्रवृत्तिर
स्त्येवेत्युच्यते अधिकारइति केषांचिदप्रवृत्तिदर्शनमाशंक्योच्यते नोवर्ज्जिताइति गुरुणेतिशेषः १५७न
न्वन्यमार्गेषुतत्तदाचार्य्यकल्पित संध्यादिवदत्रापि युक्तेत्यपेक्षायामुच्यते वेदेति वेदप्रतिपादितसंध्यादित्य

वैदिकीयाभवेत्संध्याद्विजातिभ्यःश्रुतीरिता सैवसंध्यानचैवान्याकल्पनीयाहिवेदिभिः
१५६ अधिकारोद्विजातीनांतत्रनान्यस्यकस्यचित् यथाधिकारंकुर्वंतिद्विजानोवर्ज्जि-
ताः क्वचित् १५७ वेदसंध्यादिसंत्यज्यस्वस्वाचारःप्रकल्पितः स्वनामख्यापनार्थाय
स्वबुद्ध्याकलिमोहितैः १५८ यैराचार्यैस्तएवात्रवेदबाह्यप्रवर्तनात् कलिप्रभवपाषंड
मोहितानास्तिकामताः १५९ अद्विजानांनसंध्यादावधिकारस्तुवैदिके नामकीर्तनमा
त्रेसर्वाधिकारःश्रुतीरितः १६०

स्काकलिमोहितैरेवस्वस्वनामप्रसिद्ध्यैस्वाचारः स्वबुद्ध्याकल्पितो-
नकलितारकैरितिभावः १५८ तथाचरतोदोषोभवतीत्युच्यते यैराचार्य्यैरिति १५९ श्रीनानकमतेयद्यपिकेचि
त्संध्यादिकर्मकुर्वंतोदृश्यंते तथापितन्मार्गीयाणांबहूनांतदप्रवृत्त्यातदीयाऽसंमतिरेवभातीत्याशंक्याद्विजा

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्मनधिकाराद्विरक्तादीनामधिकारातीतत्वाच्छास्त्रसंमतैवाप्रवृत्तिर्ननदसंमतिप्रयुक्तेतिस्मृतिवाक्यप्रदर्शनपू
र्वकंसमाधीयते अद्विजानामित्यादिषड्भिः अद्विजानांशूद्रादीनांवैदिकेसंध्यादौकर्मणिनाधिकारःशूद्रोय
ज्ञेऽनवक्लृप्तः यद्युहवैश्मसानंयच्छूद्र इत्यादिश्रुतेस्तथाचाधिकाराभावात्तेषामप्रवृत्तिः १६० विरक्तादीना
मधिकारातीतत्वेभागवतवाक्यानिपठ्यंते तावदित्यादि पूर्वार्द्धे निर्विण्णानांज्ञानयोगोन्यासिनामिहक
र्मसु इतिवाक्योपदिष्टेनिर्वेदाख्यज्ञानाधिकारप्राप्त्याकर्माधिकारातीतत्वं उत्तरार्द्धेयदृच्छयामत्कथादौजातश्र

तावत्कर्माणिकुर्वीतननिर्विद्येतयावता मत्कथाश्रवणादौवाश्रद्धायावन्नजा
यते १६१ देवर्षिभूताप्तनृणांपितॄणांनकिंकरोनायमृणीचराजन् सर्वात्म
नायःशरणंशरण्यंगतोमुकुंदंपरिहृत्यकृत्यं १६२

द्धस्तुयःपुमानित्यादावुक्तभक्त्य
धिकारसंपत्यातदतीतत्वंज्ञापितमितिभावः १६१ ननुपितृदेवादीनांऋणानपाकरणेकथंकर्मत्यागस्तत्रो
च्यते देवर्षीति देवाऋषयःभूतानिभोजनावसरे आप्ताःप्राप्तायेनराःपितरश्चपंचमहायज्ञाराध्यास्तेषाम
यंपुरुषोऋणीनभवति ऋणित्वाभावेनैवकिंकरश्चनभवति कइत्यपेक्षायामाह सर्वात्मनेति यःकृत्यंकृतिसा २८
ध्यंफलंपरिहृत्य शरण्यंमुकुंदंशरणंगतः परिहृत्यकर्त्तमितिपाठेकर्त्तभेदंपरिहृत्यतद्भावंप्राप्तइत्यर्थः १६२

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ननुश्रेयान्स्वधर्मोविगुणइत्यादिवचनेनस्वधर्मत्यागेपातित्यापत्तिस्तत्रोच्यते त्यक्तेति स्वधर्मंत्यक्त्वाहरे
श्चरणांबुजंभजन् अपक्वोऽप्राप्ततत्स्वरूपसाक्षात्कारोयदिनतस्तत्स्वरूपात्मकमोक्षान्मोक्षमप्राप्य यत्र
क्वचिद्योनौपतेत्तदाप्यमुष्यकिमभद्रंअभूत् अपितुन भक्तानांप्राप्ताधमयोनीनामपिहनुमत्प्रल्हादवि
भीषणवृत्रधर्मव्याधविदुरादीनांदेवादिस्तुत्यदर्शनात् अभजतांतुस्वधर्मतः कोवार्थआप्तःप्राप्तः धर्मःस्व
नुष्ठितःपुंसांविष्वक्सेनकथासुयः नोत्पादयेद्यदिरतिंश्रमएवहिकेवलमितिश्रममात्रत्वस्मरणात् १६३ गीता

त्यक्त्वास्वधर्मंचरणांबुजंहरेर्भजन्नपक्वोथपतेत्ततोयदि यत्रक्ववाभद्रमभूद
मुष्यकिंकोवार्थआप्तोऽभजतांस्वधर्मतः १६३ जिज्ञासुरपियोगस्यशब्दब्रह्मा
तिवर्तते त्रैगुण्यविषयावेदानिस्त्रैगुण्योभवार्ज्जुन १६४

वाक्यमुच्यते जिज्ञासुरपी
ति ज्ञानयोगस्यभक्तियोगस्यचजिज्ञासुरपिकिमुवाच्यंतद्योगसिद्धः सोपिशब्दब्रह्मेति पूर्वकांडमतिक्रम्य
वर्त्तते वाक्यांतरसंवादउच्यते त्रैगुण्येति यद्यपिवेदास्त्रैगुण्यविषयानिर्गुणस्य यतोवाचोनिवर्ततेअप्राप्यम
नसासहेत्यादिश्रुतिभिर्मनोवागगोचरत्वेन त्रैगुण्यमेवत्रिगुण मायोपहितंचैतन्यमीश्वरमेवविषयीकुर्वं
तीतित्रैगुण्यविषयाः क्वचिदजयात्मनाचचरतोनुचरेन्निगमइत्यादिवचनात् तथापिश्रुतयस्त्वयिहिफलंत्यत

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न्निरसनेनभवन्निधना इत्यादिवाक्याद्वेदानांनिर्गुणेएवपर्य्यवसानत्वंतैर्वेदै र्निस्त्रैगुण्यएवभवेत्यर्थः १६४ विरक्तादीनामुक्तवाक्यैःकर्म्मानधिकारमुपसंह्रियते विरक्तानामिति आदिपदेनपरीक्ष्यलोकान् कर्मचितान् ब्राह्मणोनिर्वेदमायान्नास्त्यकृतः कृतेनेत्यादयोग्राह्याः १६५ तेषांकर्माधिकारशून्यानांश्रेयोमार्गोपदेशोनिरूप्यते अद्विजाइत्यादिद्वाभ्यां हरेरतिः सापरानुरक्तिरीश्वरेइति भगवताशांडिल्येनसूत्रिता ईश्वरेयानुरक्तिः प्रीतिः

विरक्तानांतथाभक्तिज्ञानयोगाधिकारिणां इत्यादिशास्त्रवचनैर्नैवकर्माधिकारिता १६५
अद्विजायेविरक्तावाभक्तिज्ञानपथेरताः तेषांकर्माधिकारस्याभावादेवहरेरतिः १६६
नामसंकीर्त्तनंब्रह्मविचारश्चप्रदर्शितः कालेकालेहरेर्गानंवर्णितंगुरुवंदनं १६७ मद्भक्ति
विमुखानांहिशास्त्रगर्तेषुमुह्यतां नज्ञानंनचमोक्षःस्यात्तेषांजन्मशतैरपि १६८

सापराभक्तिरिति १६६ तत्साधनंनामसंकीर्त्तनंब्रह्मविचारश्च कालेकालेप्रातर्मध्यान्हंसायंशयनावसरश्चतस्मि- न्नितिनियमार्थेयद्वाकालेकालेइति क्षणेक्षणे हरेर्गानंगुरुवंदनंचवर्णितं अरेभजहरेर्नामक्षेमधामक्षणेक्षणे ब- हिःसरति निःश्वासो विश्वासःकःप्रवर्तने यस्यदेवेपराभक्तिर्यथादेवेतथागुरौ तस्यैतेकथिताह्यर्थाः प्रकाशंते २९ महात्मन इत्यादिस्मृतिश्रुतिवचनेभ्यः १६७ अन्वयव्यतिरेकाभ्यांज्ञानमोक्षयोर्भक्त्याधीनतयापिहरिगुरुभक्ति

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गुणगानविधिरितिसप्रमाणमुच्यते मद्भक्तीत्यादिसार्द्धत्रिभिः शास्त्रगर्तेषु अनात्मविषयतर्कचिकित्साकामादि शास्त्रेषु मुह्यतांशास्त्रत्वभ्रांत्या तन्निमग्नानांतदुक्तमभियुक्तैः यदानंदसूनोःपदांभोजयुग्मेरनिर्वानुतिर्वानतिर्वा नजाता तदापंडितंमन्यतांमानभाजांघटत्वेपटत्वेपटुत्वंवृथास्यात् तार्किकाघटपटेतिरटेयुः शाब्दिकाखफछठे तिपठेयुः मादृशैःसततंस्मरणीयौरामचंद्रचरणौरमणीयौ इतिजन्मशतैरसंख्यातैरित्यर्थः १६८ रामवाक्यं

पूर्वभूमिकृतोपास्तिरुत्तरांभूमिमानयेत् इत्यादिवचनैर्भक्तिहीनस्यज्ञानमोक्षयोः १६९
अभावोभक्तिमाहात्म्यात्भूमिवृद्धिस्तथेरिता तस्माद्धरेर्गुरोर्भक्तिःकालेकालेगुणोरु
१७० वर्णितंनानकेनाथसर्वोद्धारमभीप्सता वर्णाश्रमादिसद्धर्मानाधिकारिषुवर्जित.
१७१ ज्ञाननिष्ठोविरक्तोवामद्भक्तोवानपेक्षकः सलिंगानाश्रमांस्त्यक्त्वाचरेदविधिगोचरः १७२

व्यतिरेकेदर्शयित्वाभक्तिरसायनगतमधुसूदनवाक्यंभक्त्याभज्ञानभूमिवृद्धावुच्यते पूर्वेति शुभेच्छासुविचारणा तनुमानसासत्वापत्त्यसंसक्तिपदार्थाभावनीतुर्य्याख्यज्ञानसप्तभूमिषु पूर्वभूमौकृतोपास्तिर्भक्तिरुत्तरांभूमि-मानयेत् प्रापयेदित्यादिवाक्यैः १६९ अभक्तस्यज्ञानमोक्षयोरभावस्तथाभक्तिमाहात्म्यात् ज्ञानभूमिवृद्धिर्यस्मादी रितातस्माद्धरिगुरुभक्तिर्गुणगानंचसर्वोद्धारमभीप्सतानानकेनवर्णितं १७० येत्वधिकारिणस्तेषुतद्धर्मास्तुनैववर्ज्जिताः १७१

ज्ञानादिनिष्ठानांतुकर्मत्यागेदोषशंकैव-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नास्तीतिसप्रमाणमुच्यते ज्ञाननिष्ठइत्यादित्रिभिः अनपेक्षकोनिष्कामोमद्भक्तोवासलिंगानाश्रमांस्त्यक्त्वाचरेदित्यत्राश्रमलिंगग्रहाभावएवापाद्यतेनाश्रमलिंगत्यागविधिस्तत्स्वीकारे अविधिगोचरइत्यनेनव्याघातापत्तेः १७२ ज्ञाननिष्ठाज्ज्ञानिनस्तत्साधनेरता जिज्ञासवश्चजिज्ञासुरपियोगस्यइति पूर्वदर्शितवाक्यात् १७३ मनागपिस्वल्पमपिकैमुत्यन्यायदर्शनायोच्यते अन्यदोषापहारिणामिति १७४ तत्रज्ञानिनोऽन्यदोषा

इत्यादिवचनैर्येतुविरक्ताभक्तिसंयुताः नदोषभाजोज्ञानैकनिष्ठास्तत्साधनेरताः १७३
नतेषांपरहंसानांकर्मसुत्यागमात्रतः मनागपिभवेत्दोषोह्यन्यदोषापहारिणां १७४ यस्यानुभवपर्य्यंताबुद्धिस्तत्वेप्रवर्त्तते तद्दृष्टिगोचराःसर्वेमुच्यंतेसर्वकिल्बिषैः १७५ स्नातंतेनसमस्ततीर्थसलिलेदेवाश्चसंपूजितायज्ञानांचकृतंसहस्रमयुतंसर्वापिदत्तावनिः संसाराच्चसमुद्धृताःस्वपितरःपूज्यश्चवंद्योप्यसौयस्यब्रह्मविचारणोक्षणमपिस्थैर्य्यंमनः प्राप्नुयात् १७६

पहारित्वेतन्माहात्म्येचस्मृतीदर्श्येते यस्येत्यादिद्वाभ्यां यस्यबुद्धिस्तत्वे अनुभवपर्य्यंतासाक्षात्कारावधिः प्रवर्ततेतद्दृष्टिगोचराइतिकृपादृष्टिविषयाविवक्षिताः १७५ एतस्यैवानंदस्यान्यानिभूतानिमात्रामुपजीवंतीतिश्रुत्यासर्वतीर्थस्नानयज्ञदानादिफलभूतसुखानांब्रह्मानंदमात्राभिधेयप्रतिबिंबत्वेनब्रह्म





CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सुखेंतर्भावात्तत्प्राप्तौ सर्वकृतमेवेति नतत्तदुक्तिः प्रशंसारूपाब्रह्मरूपतयापूज्यत्ववंद्यत्वेपि सूपपन्नेएव १७६
नामकीर्तनादिभक्तिमाहात्म्येप्रमाणानुच्यंते अहोबतेत्यादिचतुर्भिः अहोइतिहर्षे बतेत्याश्चर्ये श्वपचोप्य
तिनीचोप्यतएवगरीयानतिशयेनश्रेष्ठोभवति यत् यस्मात्तज्जिह्वाग्रेतुभ्यमिति तवनामवर्त्तते ननुनाम्नः
किमतिमहत्वंतत्राह येतेनामगृण्हंतितेएवतपस्तेपुरिति वानप्रस्थधर्मोपलक्षणं जुहुवुरिति गृहस्थस्य ब्र-
ह्मानूचुरिति ब्रह्मचारिणांधर्माणां सस्नुरिति सर्वसाधारणधर्माणामुपलक्षणंतेएवार्याः सर्वश्रेष्ठपर हंस

अहोबतश्वपचोतोगरीयान् यज्जिह्वाग्रेवर्ततेनामतुभ्यं तेपुस्तपस्तेजुहुवुः सस्नुरा
र्याब्रह्मानूचुर्नामगृण्हंति येते १७७ सर्वपापप्रसक्तोपिध्यायन्निमिषमच्युतं स
घस्तपस्वीभवतिपंक्तिपावनपावनः १७८

रूपाश्चनान्ये आराधितोयदिहरिस्तपसाततः
किंनाराधितोयदिहरिस्तपसाततः किंअंतर्बहिर्यदिहरिस्तपसाततः किंनांतर्बहिर्यदिहरिस्तपसाततःकिं श्रम
एवहि केवलमित्यादिनान्यत्तपोयज्ञादेर्भक्तिंविना वैयर्थ्यश्रवणात् १७७ विष्णुपुराणवाक्यप्रमाणमुच्यते
सर्वेति ध्यायन्सद्यस्तपस्वीभवतीत्यत्र शतृप्रत्ययप्रयोगेण मध्येक्रियांतरापेक्षांक्षणांतरविलंबंचवारयति
तपस्विनंविशेषयति पंक्तिपावनपावनइति श्रीमद्भागवते किंचाहंनभुवंयास्येनरामय्यामृजंत्यघंमृजा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मितदर्घंकुत्रराजंस्तत्रविचिंत्यतां भगीरथउवाच साधवोन्यासिनःशांताब्रह्मिष्ठालोकपावनाः हरंत्यघंतेंग
संगात्तेष्वास्तेह्यघभिद्धरिरिति सर्वलोकपावन्यागंगायाअपिपावनत्वेनविष्णुनामस्मरतां भगवद्भक्तानांस्म
रणात् १७८ मानांतरमुच्यते कुलमिति विभुस्वप्रकाशचिदानंदसिंधौ परेब्रह्मणिविष्णौ नदेवब्रह्मपरमंक
वीनामित्यादिश्रुते र्यस्यचित्तंलीनंतस्यसाक्षाज्जननीकृतार्थाकृताः संपादिताः सर्वेपुरुषार्थायया तथाभूतेति

कुलंपवित्रंजननीकृतार्थावसुंधरापुण्यवतीचतेन अपारसंवित्सुखसागरेऽस्मिन्
लीनंपरेब्रह्मणियस्यचेतः १७९ कुलंपवित्रंजननीकृतार्थावसुंधरापुण्यवतीचते
न स्वर्गस्थितास्तत्पितरोपिधन्यायेषांकुलेवैष्णवनामधेयं १८० इत्यादिवचनै
र्ज्ञानभक्तियोगरताश्चये तेषांनकर्मणांत्यागे दोषोभातिकथंचन १८१

किमुवाच्यं तस्यकुलमपि पवित्रंवसुंधराचतेनैवपुण्यवती भवतीतिभावः १७९ यस्यविष्णौचित्तंली
नंतस्यकावार्तायेषांकुलेवैष्णवो यमितिनाममात्रमपिजातं तस्यापितत्पितरोपिधन्या इतिअन्यैः स्व
र्गस्थैः स्तुत्याः १८० प्रमाणानिदर्शयित्वा ज्ञानभक्तिरतानां कर्मत्यागेदोषाभावंनिगमयति इत्या
दीति १८१ ॐ श्रीरामचंद्रायनमः ॐ श्रीकृष्णायनमः



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

संन्यासिनांशास्त्रतत्वमविदुषांश्रीनानकमते प्रामाणिकत्वाभावशंकामनूद्यनिरस्यते येत्विति विद्वांसस्तु नैवंवदंतितेतुध्रुवंशास्त्रार्थाविदइतिभावः १८२ तद्वाग्वज्जंतच्छिरस्येवपात्यते तेषामेवेति ननुकलौ सर्वथानिषेधेकथंभगवत्पूज्यपादैस्तत्प्रवर्तनंतत्रोच्यते कालशेषेणेति श्रीमदाचार्य्यप्रादुर्भावावसरेच तुः सहस्रचतुःशतकलिवर्षाणामनतीतत्वात्तदातत्प्रवर्तने दोषाभावात् १८३ कथंतर्हिश्रीनानकेनतदुपे

येतुसंन्यासिनोब्रूयुःनानकस्यमतेखलु नप्रमाणंकिमप्येतत्तेशास्त्रार्थाविदोध्रुवं १८२ तेषामेवहिसंन्यासःकलौस्पष्टंनिषिध्यते कालशेषेणश्रीमद्भिराचार्य्यैःसंप्रवर्ति तः १८३ नाधुनातस्यकालोस्तितस्मान्नानकवेदिना तमुपेक्ष्यैवसंन्यासोजन्मापादक कर्मणां १८४ सर्ववेदपुराणादिसंमतःसंप्रवर्तितः सर्वश्रेयस्करोमार्गोयतःसर्वोपका रकः १८५

क्षितमित्यपेक्षायामुक्तकालात्ययादित्युच्यते नाधुनेति वेदिनेतिवेदतत्वार्थवेदिनातमु पेक्ष्यैवनतुनिरस्यकलिप्रभावात्कर्तुमशक्यत्वेनतन्निषेधेपिवेदिनोवैदिकधर्मनिरासप्रवृत्तनौचित्यात्तुज न्मापादककर्मणांसंन्यासः संप्रवर्तितइत्युत्तरेणान्वयः १८४ प्रवृत्त्यईत्वायतत्संन्यासविशेषणान्युच्यं ते सर्वेति आदिशब्देनेतिहासादिश्रीमद्गीतायांभगवतात्याग्रहेणतदापादनात् सर्वेषांश्रेयसोमो

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

क्षस्यहेतुः स्त्रीशूद्रादीनामपितत्राधिकारात् नतुसर्वाणिश्रेयांसिकरोतीतिविग्रहस्त्रिवर्गस्यानित्यत्वदुःख संमिश्रत्वाभ्यांश्रेयस्त्वस्यैवाभावात् सर्वाधिकारत्वमेवस्पष्टीक्रियते सर्वोपकारकइति १८५ श्रीनानकमत नाम्नोपिगीतोक्तिसंमतत्वमुक्तंस्मार्य्यते उदासीनवदिति १८६ पूर्वंकुत्राप्यदर्शनमाशंक्यसमाधीयते केना पीति पूर्वाचारःप्रदर्श्यते ध्रुवपुत्रेत्यादिसार्द्धेन १८७ तादृगाचारेनिमित्तमुच्यते विरक्तैरिति वैराग्येणगृह

उदासीनवदासीनइतिश्रीकृष्णवाक्यतः नामाप्यवधूतंतस्यनैवाश्रौतंमतंहि
तत् १८६ केनापिनकृतंपूर्वमितिशंकापिनोचिता ध्रुवपुत्रोत्कलाद्यैश्चबहुभिरेवा
वधूतकैः १८७ विरक्तैस्त्यागशीलैस्तुसंन्यासानधिकारिभिः पूर्वैराचरितं
शास्त्रसंमतंसर्वतारकं १८८ नानकेनैवमार्गोयंनूतनोनैवकल्पितः स
नातनोवेदमार्गोहरिणागुरुरूपिणा १८९

स्थाद्याश्रमेरुचिरहितैरतएवत्यागशी लैर्मुखजत्वाद्यभावेनसंन्यासानधिकारिभिः पूर्वैराचरितत्वेहेतुःशास्त्रसंमतं आश्रमसंन्यासादुत्कर्षत्वायो च्यते सर्वतारकमिति १८८ अतोननवीनःपुरुषबुद्धिकल्पितोयंमार्गइत्युच्यते नानकेनैवेतिसार्द्धेन सना तनएववेदमार्गोगुरुरूपिणाहरिणा १८९ ७ ७ ७



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कलौतस्यैवौचित्यात्प्रवर्तितः सनातनस्य मार्गस्य प्रवर्त्तनमात्रेणतदीयत्वप्रसिद्धौ शांकरसंप्रदायो दृष्टांतत्वे
नप्रदर्श्यते न्यासाश्रमइत्यादिसार्द्धेन १९० १९१ दार्ष्टांतिकेपिमार्गस्यश्रौतत्वेनसनातनत्वंश्रीगुरुणाप्रव
र्तनेनतदीयत्वप्रसिद्धिश्चनिरूप्यते तथैवेत्यादिद्वाभ्यां तथैवजन्मापादककर्मणांन्यासोपिपरहंसेषुश्रौतन्या

प्रवर्तितःकलौसर्वजनोद्धारकरोध्रुवं न्यासाश्रमोयथालुप्तःशंकरेणप्रवर्तितः १९०
कालावशेषमालक्ष्यवेदमार्गःसनातनः शांकरःसंप्रदायोहिकथ्यतेतत्प्रवर्तनात् १९१
तथैवश्रौतन्यासेषुपरहंसेषुवर्णितः श्रौतएवहिन्यासोयंजन्मापादककर्म्मणाम्
१९२ सनातनोनानकेनकलौलुप्तःप्रवर्तितः नानकस्यैवमार्गोयंकथ्यतेतत्प्रवर्त्तना
त् १९३ न्यासस्यवानप्रस्थस्यकलौस्पष्टनिषेधतः अनेनैवहिमार्गेणकलावुद्धार
संभवः १९४

सेषुयतोवर्णितोऽतःश्रौतएव १९२ एवंसनातनोपिलुप्तःसन् यतःकलौनानके
नप्रवर्तितोतस्तत्प्रवर्तनादेवहेतोस्तदीयमार्गत्वेनकथ्यते १९३ कलौतन्मार्गस्यैवमुख्यश्रेयोहेतुत्वंप्रदर्श्यते
मार्गांतराभावात् न्यासस्येत्यादिना न्यासवानप्रस्थयोर्निषेधात् गृहस्थधर्म्मणांप्रवृत्तिपथत्वेनत्रिवर्गसाध
कत्वेपिमोक्षेप्राधान्याभावात् कलावनेनजन्मापादकन्यासात्मकेनैवमार्गेणोद्धारसंभावनेतिभावः १९४

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

श्रीनानकस्य गुरुश्रवणाभावेन बोधाद्यभावमाशंकते नानकस्येति अत्रेदमनुमानं नानकस्य नबोधो गुरूपदेशाभावादस्मदादिवदिति मार्गस्यानादित्वंच गुरुपरंपरयैव भवति तदभावेऽनादित्वस्याप्यसिद्धिरिति भावः १९५ समाधीयते इतिकश्चिदित्यादिद्वाभ्यां इतियदि कश्चिद्वदेत्तत्कथनमपि यतो वृथाऽतोऽनुचितमेव जीवेष्वपि तथादर्शनादीश्वरे कैमुत्यसिद्धमित्यभिप्रेत्योदाह्रियते वामदेवादिसिद्धानामिति ननु

नानकस्य गुरुर्नैव श्रूयते गुरुणा विना कथं बोधः कथं तस्य मार्गस्यानादिता भवेत् १९५ इतिकश्चिद्यदि वदेत्तदप्यनुचितं वृथा वामदेवादिसिद्धानां पूर्वजन्मोपदेशतः १९६ बोधस्य श्रूयमाणत्वाज्जीवानामपि प्रायशः नानकस्य हरेः साक्षान्नैव शंकास्पदं खलु १९७

वामदेवादीनामपि पक्षसमत्वेन तत्राप्युपदेशाभावादेव हेतोर्बोधाभावः साध्य इत्यनुमानमाशंक्य स्वरूपासिद्धिः प्रदर्श्यते पूर्वजन्मोपदेशत इति १९६ बाधोप्यभिधीयते बोधस्य श्रूयमाणत्वादिति तथाचागमेन बाधः तथाच प्रथमनानकपक्षीयानुमाने नानकोऽजन्मना बोधवान् सिद्धत्वाद्वामदेवादिवदिति सत्प्रतिपक्षत्वं दर्शितं जीवत्वंच तत्रोपाधिस्तस्य पक्षे साधनाव्यापकत्वमुच्यते नानकस्येति १९७ ७ ७ ७ ७ ७ ३३

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गुरूपदेशंदर्शयतातत्रस्वरूपासिद्धिरप्युच्यते आचार्यान्ह्येवेति नचनानकस्यनगुरुसंपादनंईश्वरत्वान्ना रायणवदितिवाच्यं रामचंद्रकृष्णादौसाधारणानैकांतिकत्वात् ननुपक्षविपक्षयोर्नानककृष्णयोः सर्व ज्ञयोर्गुरुसंपादनंवृथानिःप्रयोजनत्वात् व्यतिरेकेऽस्मदादिवत्इत्याशंक्य तत्रापिस्वरूपासिद्धिर्द्योत्य ते श्रुतिमार्गप्रवृत्तयेइति श्रुतिरेवोच्यते आचार्यान्ह्येवेति १९८ ईश्वरत्वहेतुकप्रथमानुमानेश्रीनानकवाक्ये

आचार्य्यान्ह्येवविद्येतिश्रुतिमार्गप्रवर्त्तये सर्वज्ञत्वेपिप्रभुणागुरुःसंपादितोहरिः १९८
श्रीरागेस्वीयपद्येहिनानकेनोदितंस्वयं मयास्वीयगुरुःपृष्टोनैवनान्यत्रश्रीहरिः १९९ य
दितस्यगुरुर्नैवभवेदेवंवदेत्कथं श्रीमन्नारायणेनैवोपदिष्टोनानकःस्वयं २०० सएवेष्टो
गुरुश्चापिनानकस्ययतोऽभवत् ततोहरेरभेदेनगुरुमेवजजापसः २०१ नैवबाधोपिप्रदर्श्य

ते श्रीरागेइति १९९ तदुक्तिरेवविपक्षबाधकेनदृढीक्रियते यदितस्येति श्रीनानकस्येष्टगुर्वोरभेदउच्यते श्रीमदि ति नचेष्टदेवस्योपदेष्टृत्वमनुपपन्नमितिवाच्यं अहंविवस्वतेयोगमित्यादिनाविवस्वतेमत्स्यरूपेणसत्यव्रतायव राहरूपेणधरिण्यैयज्ञेपृथवेऽर्ज्जुनादिभ्यश्चेष्टस्याप्युपदेष्टृत्वदर्शनात् सर्वभक्तेभ्यश्चदेहांतेदेवःपरमंब्रह्मतार कंव्याचष्टेयमेवैषवृणुतेतेनलभ्यइतिश्रवणात् २०० नारायणोपदेशद्योतकउच्यते सएवेति २०१

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गायत्र्याइष्टमंत्रस्यदीक्षादेश्चाभावशंकानूद्यते यस्त्विति २०२ एवमनूद्यसमाधीयते मिथ्यैवेति गायत्र्याःस
र्वत्रैक्यात्कुत्रापितस्याः कल्पितत्वाभावेनश्रीगुरुमतेपिसैववैदिकीगायत्रीतिभावः २०३ अन्यसंप्रदायेषुतद्भेद
माशंक्योच्यते संप्रदायेति संप्रदायभेदेषुतत्तदिष्टदेवगायत्र्याः कचिद्भेदेपिवर्णदाब्रह्मगायत्रीतुनैवभिद्यते

यस्तुकुत्रचिद्भेदेत्र्येवंगायत्रीनोभवन्मते मंत्रोमंत्रोपदेशश्चनैवसंप्रतिदृश्यते २०२
मिथ्यैवकथ्यतेतेननैवसम्यग्विचारतः गायत्रीछंदसांमातानैवकेनापिकल्पिता
२०३ संप्रदायप्रभेदेषुगायत्रीनैवभिद्यते स्वीयेषुसंप्रदायेषुगायत्रीभेदकल्प
काः २०४ पाषंडिनोभवंतेवैवेदमार्गप्रभेदकाः वैदिकानांवैदिकेषुनोचि-
तास्वीयकल्पना २०५ गायत्रीछंदसांमातायाद्विजेषुश्रुतीरिता सैवना
नकशिष्येषुजप्यतेहिद्विजातिभिः २०६ ॥ ॥

तद्भेदकल्पकानांदोषउच्यते स्वीयेष्वित्याद्यर्द्धाभ्यां २०४ वैदिकानांतेभ्योवैलक्षण्यमुच्यते वैदिकानामिति वै
दिकेषुवेदोक्तकर्मसुचोदनालक्षणोह्यर्थोधर्मइतिसूत्रेणधर्मस्यचोदनैकप्रमाणत्वात्तत्रस्वीयकल्पनान
वकाशात् २०५ श्रीगुरुमतेवैदिक्याएवगायत्र्याजप्यत्वमुच्यते गायत्रीति २०६ ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तच्चनाविधिपूर्वकं किंतूपनयनादिपूर्वकमितिकथ्यते उपनीयेति ब्राह्मणेभ्यः यथाशास्त्रमुपनीयोपनयनंप्रा प्यगुरुशिष्यायेद्विजातयस्त्रैवर्णिकास्तेयथायोग्यंप्रतिसंध्यासुजपंति २०७ अनधिकारिषुतद्प्रवृत्तिःस्वी क्रियते येषामिति तच्चाकरणंन दोषायेत्यभिप्रायः स्वबुद्धिदोषेणकैश्चित्तदुल्लंघनेतेषामेवतद्दोषोनसत्सथ

उपनीययथाशास्त्रंब्राह्मणेभ्योयथार्हतः जपंतिप्रतिसंध्यासुगुरुशिष्याद्विजातयः २०७
येषांनैवाधिकारोस्तितैस्तुनक्रियतेकिल प्रमादाद्वाहठाद्वापिमौढ्याद्वैस्तुदुराग्रहात्
२०८ स्वधर्म्मंत्यज्यतेपापैस्तेषांदोषोभवेद्ध्रुवं मूढानांनैवदोषेणाचार्य्यमार्गोहिदुष्यते
२०९ मंत्रस्तुरामनामेतिनानकेनप्रबोधितः ध्यानंसर्वत्रपूर्णेतिकलिक्लेशादिखंडनम्
२१० मालामंत्रस्तथैवान्योजप्याख्यःपरिकीर्त्तितः भगवद्गुणगानायतथावाणीसुवृं
हिता २११

स्येत्यभिधीयते प्रमादादित्यादिसार्द्धेन प्रमादाद्विस्मरणात् हठात् रागादिनैवमेवकरि- ष्येइतिनिर्बंधात् मौढ्यान्द्धर्माज्ञानात् दुराग्रहाद्दुःसंगेनान्यपाषंडादिमतेआग्रहात् २०८ २०९ मंत्राभावशं- कानिरस्यते मंत्रस्त्विति मंत्रंतुरामनामध्यानंसर्वत्रपूर्णइतिवाक्येन २१० भगवद्गुणगानार्थंगीतासहस्रना मादिवद्दीर्घपाठात्मकमालामंत्ररचनंवाण्यानिर्माणंचप्रदर्श्यते मालामंत्रइति २११

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ननुजनोद्धारायवेदेवर्तमाने किमितिभाषावाणीरचनमित्याशंकायांवेदस्यसर्वानधिकारकत्वात्तदर्थंपुराणा
देरपिमंदबुद्धिभिर्दुरवगमत्वाज्जनोपकारायतत्प्रवृत्तिरित्युच्यते वेदपाठेइति हरेःकीर्तनंभाषयारचितमिति
शेषः २१२ तथापिदेववाण्यातत्करणमुचितमित्याशंकायांतस्यापिबहूनांबुद्धिमांद्येनदुरवगमत्वात्तथाकरण
मितिप्रत्युच्यते बहूनामिति २१३ गुरुलक्षणवाक्यप्रामाण्यादपितथाचरणमितिनिदर्श्यते देशभाषादिभि

वेदपाठेषुसर्वेषांनाधिकारःप्रचक्षते सर्वलोकोपकारार्थंभाषयाकीर्तनंहरेः २१२ ब
हूनांबुद्धिमांद्येनशास्त्रबोधःसुदुर्लभः तेषामप्युपकारार्थंश्रौतार्थोभाषयोदितः २१३
देशभाषादिभिःशिष्यंबोधयेत्सगुरुर्मतः इत्यादिशास्त्रमाश्रित्यभाषयोद्धारितंजगत् २१४
आत्मावाअरेद्रष्टव्यइत्यात्मदर्शनायहि श्रोतव्यःश्रवणोचात्रनियमेयोविधिर्मतः २१५

रिति २१४ भाषाप्रबंधादीनांश्रौतनियमाविधिनाव्यावृत्त्यत्वंशंकते आत्मेत्यादिसार्द्धेन आत्मावाअरेद्रष्टव्य
इत्यत्रदर्शनस्यज्ञानस्यकृत्यनधीनतयाविध्यनर्हत्वेनयोग्यत्वार्थेएवतव्यप्रत्ययइत्यात्मनोदर्शनयोग्य-
त्वेनदर्शनायश्रोतव्यइतिविधिःस्वीकृतःसचनापूर्वविधिः अनधिगतगांधर्वरत्नतत्वपरीक्षाशास्त्रस्यषड्जा
दिस्वरगीतादेरत्नतत्वस्यचसाक्षात्कारादर्शनेनाधिगततच्छास्त्रस्यतत्साक्षात्कारदर्शनात् आत्मसाक्षा ३५

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्कारेपिवेदांतशास्त्रश्रवणस्यलोकतएवप्राप्तेः किंतुभाषाप्रबंधादिनैवात्मविचारे प्रवृत्तस्यवेदांतश्रवणंन स्यादितियापक्षे अप्राप्तिस्तद्व्यावृत्त्यापक्षप्राप्तस्याप्राप्तांशपूरकोनियमविधिस्तेनच नियमविधिनाव्रीहीनवह न्यादितिनियमविधिनानखविदलनादिव्यावृत्तिवत्पक्षप्राप्तभाषादिबोधनंव्यावर्त्यतेतस्माद्भाषाप्रबंधादिरच नमयुक्तंसमाधीयते इत्येवमिति २१५ २१६ तदेवापाद्यते गुरुस्त्विति यदिवेदांतश्रवणमेवप्राप्तंतदापि

तत्रव्यावर्त्यतेपक्षे प्राप्तभाषादिबोधनं इत्येवंयेवदंतिस्मतदुक्तिःपक्ष पाततः २१६ गुरुस्तूपनिषद्व्याख्यांकुर्वन्शिष्यायबोधयन् तदर्थंभाषया ब्रूयाच्चेत्किंभवतिदोषभाक् २१७ लोकेभाषांविनास्वीयांशास्त्रबोधःक थंभवेत् आदौव्याकरणार्थोपिभाषयैवप्रबुध्यते २१८

नवेदांतपाठश्रवणमात्रे णब्रह्मात्मैक्यसाक्षात्कारः किंतुतदर्थश्रवणविचाराभ्यां तथाचगुरुःशिष्यायबोधयन्नुपनिषदव्याख्यांकु र्वंस्तदर्थंचेद्भाषयाब्रूयात्तदा किंदोषभाग्भवतिअपितुन २१७ यदिभाषयानब्रूयात्तदास्वीयांभाषांवि नाशास्त्रबोधएवकथंभवेत् नकथंचिदितिभावः ननुअधीतव्याकरणस्यदेववाण्यैवार्थबोधःस्यादित्या शंक्यभाषांविनातत्राप्यनिर्वाहउच्यते आदाविति २१८ ७ ७ ७

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ननुतंत्वौपनिषदंपुरुषंपृच्छामिवेदांतविज्ञानसुनिश्चितार्था इत्यादिश्रुतेर्वेदांतंविनानान्योक्तिर्बोधहेतुरि त्याशंक्यपरिह्रियते यदावेदंविनेति सूत्रभाष्यकारोक्त्योरप्यवेदत्वात्तेनज्ञानानुदयात्तयोरपिवैयर्थ्यमि तिभावः २१९ अन्यापिव्यर्थतानिर्दिश्यते तथेति व्यासपुराणादौश्रमोपिव्यर्थः २२० वेदार्थबोधायतत्सा र्थकत्वेश्रीगुरुमतेपितत्तुल्यतेत्युच्यते यदेति सुगमत्वायव्याकरणादिपरिश्रमंविनाचबोधाय २२१ वेदार्थ

यदावेदंविनाऽन्योक्तिर्वर्जितास्यात्मबोधने सूत्रभाष्यादिकंसर्वंतदाव्यावर्त्यतेखलु २१९
तथाचैवपुराणेतिहासस्मृत्यादिसंहिताः तंत्राद्यरण्यरुदितंव्यर्थोव्यासादिसच्छ्रमः २२०
यथावेदार्थबोधायसार्थिकस्तत्परिश्रमः तदातसुगमत्वायभाषायासोपिसार्थकः २२१
सूत्रभाष्यपुराणादियथावेदार्थज्ञापकं तथाभाषाप्रबंधादिनैवव्यावर्त्यतेकिल २२२
भिन्नात्मबोधशास्त्राणिवेदार्थविमुखानिच भ्रांत्यैवपक्षेप्राप्तानिव्यावर्त्यंतेइतिस्थितिः २२३

ज्ञापकत्वेनोभयत्रतुल्याःव्यावृत्तिरित्युच्यते सूत्रेति सूत्रादियथावेदार्थज्ञापकमितिहेतोर्नैवव्यावर्त्यतेतथाभा- षाप्रबंधादिरपीत्यन्वयः २२२ किंतर्हिव्यावर्त्यतेतत्रोच्यते भिन्नात्मेति भिन्नात्मबोधशास्त्राणिसांख्यवै शेषिकादीनि वेदार्थविमुखानिचार्वाकजैनसौगतादीनि ननुतेषांब्रह्मसाक्षात्कारसाधनेपक्षेप्राप्तत्वमेव 

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नास्ति किमिति तद्व्यावृत्तिस्तत्रोच्यते भ्रांत्यैवेति विमतानि वैशेषकादीनि मोक्षहेतुब्रह्मात्मसाक्षात्कारज
नकानि शास्त्रत्वाद्वेदांतशास्त्रवदिति तर्कमूलभ्रांत्यैव पक्षप्राप्तानि न चानुमानमानसिद्धार्थस्य कथं भ्रांति
प्रतिपन्नत्वमिति वाच्यं तस्याभासत्वात्तथाहि भयप्रमादविप्रलिप्साकरणापाटवाख्यानि अप्रामाण्य
कारणानि पुरुषबुद्धिगतानि तदन्यतरदोषसंभावनया प्रामाण्यसंशयग्रस्ततया पुरुषवाक्यस्य शास्त्रत्वा
संप्रतिपत्या स्वरूपासिद्धमिदमनुमानं तथा पूर्वकांडे ब्रह्मात्मसाक्षात्काराजनकेपि शास्त्रत्वहेतुसत्वात्साधार
णानैकांतिकं तद्विषयत्वोपाधिनोपहितं विमतानि ब्रह्मात्मसाक्षात्काराजनकानि अतद्विषयत्वात् पूर्वकांड
वत् व्यतिरेके वेदांत वदिति सत्प्रतिपक्षं नावेदविन्मनुते तं बृहंतमिति श्रुत्याबाधितं चेति तदनुमानस्य जल
बाष्पे धूमबुद्ध्या तेन तत्र वह्निमत्वानुमानवदाभासत्वमेव तस्माद्भ्रांत्यैव पक्षे प्राप्तानि न चैवं सति भ्रांति प्र
तिपन्नस्य वस्तुतोऽसत्वात्कथं तद्व्यावृत्तिर्नखविदलनादेस्तंडुलनिष्पत्तिसाधनस्यैवावघातविधिव्यावर्त्य
त्वदर्शनादिति वाच्यं यतः सम्यक्साधनस्य श्रुत्या व्यावृत्यनौचित्यं भ्रांत्यापन्नस्यैव व्यावृत्यौचित्यमिति -
भ्रांत्या पक्षप्राप्ता व्यावर्त्यंते इत्येव स्थितिः नखविदलनादेरपि शास्त्रीयतत्कर्मापेक्षिततंडुलसाधनत्वाभा
वेन भ्रांत्या तत्र प्रवृत्तिर्व्यावृत्तिरिति मंतव्यम् २२३ छ छ छ

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ननुतथापिमंत्रस्यकिमितिभाषारचनंतत्रोच्यते सर्वेषामिति रचितइतिशेषः २२४ भाषामंत्रेणसिद्धभावमा
शंक्यप्रमाणवाक्यानामुपन्यासेनसमाधीयते नैववाच्यमित्यादि सप्तभिःप्रमाणान्येवोच्यंते एषइत्यादिस्प
ष्टं २२५ कस्यचिन्नामसंकेतोक्तं परिहासोक्तं स्तो भं गीतादिस्वरपूर्णार्थोक्तं अवज्ञयोक्तंवाहरेर्नामाशेषाघ

सर्वेषांनाधिकारोस्तिवैदिकेतांत्रिकेतथा तस्मात्सर्वोपकारायनाममंत्रस्तुभाषया २२४
नैववाच्यंनाममंत्रोभाषयानैवसिद्धिदः एषनिष्कंटकःपंथायत्रसंपूज्यतेहरिः २२५ सां
केत्यंपारिहास्यंवास्तोभंहेलनमेववा वैकुंठनामग्रहणमशेषाघहरंविदुः २२६ च
क्रायुधस्यनामानिसदासर्वत्रकीर्तयेत् नाशौचंकीर्तनेतस्यसपवित्रकरोयतः २२७
अपवित्रःपवित्रोवासर्वावस्थांगतोपिवा यःस्मरेत्पुंडरीकाक्षंसबाह्याभ्यंतरःशुचिः २२८
म्रियमाणोहरेर्नामगृणन्पुत्रोपचारितं अजामिलोप्यगाद्धामकिंपुनःश्रद्धयागृणन् २२९

हरं २२६ सदेत्युक्तावशौचादौतन्निषेधमाशंक्योच्यते नाशौचमिति २२७ सर्वावस्थांगतइत्यशौचशंकोन्मूल
नंजलादिनाबाह्यशुद्धिरेवायंतुसबाह्याभ्यंतरःशुचिः २२८ म्रियमाणइत्यनेनविकुवच्चित्तोनतुस्वस्थमनाःपु
त्रोपचारितंनतुस्वेष्टभगवद्बुद्ध्याश्रद्धयाहरेर्नामगृणन् अजामिलोपिभगवद्धामागान्नतुपापक्षयमात्रंतर्हिश्रद्ध ३७

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यागृणन्जपन्सन् किंपुनइति तन्माहात्म्यंमनोवागगोचरमितिभावः २२९ लोकप्रसिद्धाख्यायिकापिवाक्यान्यु
क्ताऐतिह्यप्रमाणदर्शनायोच्यते हरामेतिद्वाभ्यां कस्यचिन्म्लेच्छस्य वनेगच्छतोमारणार्थंवन्यशूकरः प्रा
प्तस्तेन तद्भयात्स्वप्राणरक्षणायमनुष्याणामावाहनायस्वभाषयाशूकरसूचकोहरामेत्याक्रोशितस्तदात
द्वदन्नेवतेनमारितस्तद्रक्षणायधावद्भिःपुरुषैर्विमानारूढश्चतुर्भुजोदृष्टः २३० इत्येषाकथादक्षिणेदेशे

हरामेतिवदन्कश्चिन्म्लेच्छःशूकरमारितः विकुंठमगमद्विष्णुर्विमानस्थश्चतुर्भुजः २३०
प्रथितादक्षिणेदेशेकथैषासार्वलौकिकी तस्मान्नाम्नस्तुमाहात्म्येनैवभाषादिनाक्षतिः
२३१ कान्हाकन्हैयाकन्हुआकान्हरेत्यादिभ्रंशितं कृष्णनामजगत्सर्वंपुनात्येवनसंशयः
२३२ गुरुभक्तिप्रवृत्त्यर्थंमंत्रोवाहगुरुर्मतः वाहइत्यव्ययोज्ञेयावद्भुतस्फुटवाचकौ २३३
अद्भुतस्फुटमाहात्म्योगुरुरत्रनसंशयः मग्नोमिथ्याभवाब्धौयज्जीवसंघःसमुद्धृतः२३४

प्रथिताउपसंहरति तस्मादिति २३१ भ्रंशस्यापिकृष्णनाम्नःसर्वप्रसिद्धोद्धारकत्वंप्रदर्श्यते कान्हेति २३२ य
स्यदेवेपराभक्तिर्यथादेवेतथागुराविति श्रुतिनिर्देशाद्गुरुभक्त्यैतज्जपार्थंचतारकोमंत्रोपिप्रकटितइत्युच्यते गु-
रुभक्तीति तदर्थोवर्ण्यते वाहइति २३३ गुरुमाहात्म्यस्याद्भुतत्वमेवप्रदर्श्यते मग्नइति मिथ्यास्वाधिष्ठाने

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्वप्रतीत्यवच्छेदेनैवस्वात्यंताभाववान्योभवः सएवाब्धिरपारइत्येवाद्भुतं तत्रनिमग्नोजीवसंघोयेनोपदेश मात्रेणाक्रियांतरमनुपेक्ष्यसम्यगुद्धृतः इत्यत्यद्भुतं २३४ अद्भुतांतरमुच्यते ईश्वरोहीतिद्वाभ्यां ईश्वरः सर्वथा भानार्होपिकस्याचिद्धिविशेषज्ञदेवगंधर्वादेरपिन भातीत्यत्यद्भुतं तत्रभानार्हत्वाय विशेषणानिविभुः सर्वदेश वर्त्तीति दूरत्वप्रयुक्तभानानर्हत्वव्यावृतिः सर्वहेतुरतएव सर्वगतइति वस्तुपरिच्छेदशून्यतया आवृतत्वेन- भानानर्हत्वव्यावृत्तिः स्वप्रकाशइति जडत्वेनसर्वस्वात्मेति भिन्नत्वेनच यद्भानानर्हत्वं तद्व्यावृत्तिर्ज्ञेयेतिभा

ईश्वरोहिविभुःसर्वहेतुःसर्वगतोप्यथ स्वप्रकाशोहिनोभातिसर्वस्वात्मापिकस्यचित्
२३५ यस्यकारुण्यमात्रेणवाक्यश्रवणमात्रतः कदापिनोवियुज्येतसाक्षात्स्वात्मतयाम
तः २३६ स्वप्रकाशंचप्रत्यंचंस्वात्मानंयद्वृतेतमः मृषैवावृत्यनोभातिनास्तीतिप्रत्ययपा
दयत् २३७

वः २३५ यः स्वप्रकाशत्वविभुत्वादिमत्वेप्यनाद्यज्ञानावरणात् कदापिनैवभातिसईश्व रोयस्यकारुण्यमात्रसाध्योपदेशमात्रतः स्वात्मतयासाक्षान्मतः प्रतीतः कदापिनवियुज्येत २३६ अद्भुतां तरमुच्यते स्वप्रकाशमितिद्वाभ्यां वस्तुतः स्वात्मत्वेप्यज्ञानकल्पितोपाधिभेदप्रयुक्तभ्रांतिकल्पितभेदव तस्तत्पदार्थस्याभानं किमुवाच्यं यद्वृतेयद्गुरूपदेशंविनायत्तमः नित्यस्वप्रकाशंप्रत्यंचं असज्जडदुःखरूप



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

बाह्यप्रपंचापेक्षयाप्रातिकूल्येनसच्चिदानंदरूपत्वेनसर्वांतरतयांचतीतिप्रत्यक्तंस्वात्मानंमृषैवावृत्यनोभाति
नास्तीत्यापादयामास २३७ तत्तमस्तन्निमित्तंजगच्चयद्वाक्यश्रवणमात्रेणक्वगतंजीवभावश्चक्वगतस्तन्नोप-
लक्ष्यतेइत्यन्वयः २३८ विष्णुरूपतयासर्वमाहात्म्यतात्पर्य्यभूमित्वंपूर्वंदर्शितंस्मार्यते गुरुर्गुरूत्तमइति उप
संह्रियते गुरुर्वाहेति २३९ मंत्रार्थमुक्ताफलमुच्यते गुरोस्त्विति स्पष्टं २४० श्रीनानकमतेशास्त्रविशेषाभाव

यद्वाक्यश्रुतिमात्रेणतमस्तन्निर्मितंजगत् क्वगतंक्वगतोजीवभावोनैवोपलक्ष्यते २३८ गु
रुर्गुरूत्तमोधामइतिविष्णुतयामतः गुरुर्वाहेतिमाहात्म्यमद्भुतंस्फुटमीरितं २३९ गुरो
स्तुमन्त्रराजोयंसर्वोद्धारकएवहि यस्योच्चारणमात्रेणमुच्यतेभवबंधनात् २४० यस्तु
ब्रूतेनयुष्माकंशास्त्रंकिमपिविद्यते तंब्रूयाद्वेदतोभिन्नंशास्त्रंप्रामाणिकंनहि २४१ वेद
भिन्नानिशास्त्राणिपाषंडानिनसंशयः यैस्तानिकल्पितानीह नूनंपाषंडिनोमताः २४२

माशंक्योच्यते यस्त्विति वेदतोभिन्नंतद्विरुद्धं अन्यथास्मृतितंत्रभाष्यादीनामप्रामाणिकत्वापत्तेः तेषांतन्मूलत्वे
पिव्यक्तितस्तद्भिन्नत्वात् विरुद्धानांतुप्रत्यक्षानुपलब्धेर्थैर्व्याप्तिग्रहणलौकिकशब्दप्रवृत्यादेरसंभवेनलोकवेदप्रमा
णागोचरत्वादप्रामाणिकत्वमेवेतिभावः २४१ वेदभिन्नानिविरुद्धानिसौगतार्हतादीनितत्तत्कल्पकेष्वपिदोष

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

उच्यते यैस्तानीति २४२ श्रीमन्नानकस्यतदप्रवृत्तिः सहेतुकोच्यते वेदिनेति अत्रवेदिनेतिहेतुगर्भं विशेष
णंतथाचनानकेनभिन्नंशास्त्रंनकल्पितंवेदित्वात् व्यतिरेकेर्हताादिवत् नचकणादिप्रणीतवैशेषिकादौसाधारणा
नैकांतिकतेतिवाच्यं भिन्नशब्दस्यविरुद्धार्थपरत्वस्यनिर्णीतत्वाद्वेदाविरुद्धतत्तच्छास्त्रापादितार्थैविरुद्धत्वाभा
वेनविरुद्धशास्त्राकल्पकत्वसाध्यस्यापिसत्वाद्विरुद्धेतुहेतोरप्यभावादनैकांतिकत्वासिद्धेः किंचसर्वानर्थनिवृ
त्तिपूर्वकनित्यनिरतिशयब्रह्मानंदप्राप्तिहेतुत्वात् ब्रह्मात्मैक्यमेवहितंतच्छासनतोवेदएवशास्त्रंव्यतिरेकेआ
र्हताादिवत् नचसमस्तवेदस्यात्र पक्षत्वेपूर्वकांडांशेस्वरूपासिद्धिः वेदांतमात्रस्यैवपक्षत्वेपूर्वकांडेस्यशास्त्र

वेदिनानानकेनेहभिन्नंशास्त्रंनकल्पितं वेदएवहिशास्त्रंस्यात्हितशासनतोध्रुवं २४३

त्वसद्भावेनसपक्षत्वा त्ततोपिव्यावृत्तहेतोरसाधारण्यमितिवाच्यं सर्वापेक्षाचविद्यायज्ञादिश्रुतेरश्ववादिति त
मेतमात्मानंवेदानुवचनेनब्राह्मणाविविदिषंति यज्ञेनदानेनतपसानाशकेनसर्वेवेदायत्पदमामनंति वासुदेव
परावेदावासुदेवपराःक्रिया वेदैश्चसर्वैरहमेववेद्य इत्यादिसूत्रश्रुतिस्मृतिभ्योंतःकरणशुद्धिविविदिषाद्वाराब्र-
ह्मात्मैकत्वेएवपर्य्यवसानेनपक्षद्वयेपिदोषद्वयानवतारात् फलांतरश्रवणस्यापितेनप्रलोभ्यशुद्धिहेतुकर्मसंमु- ३९
र्खीकरणार्थत्वात् परोक्षवादोयंबालानामनुशासनं कर्ममोक्षायकर्माणिविधत्तेह्यगदंयथेतिश्रीमद्भागवतेनिर्णीतत्वा
त् २४३



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सूत्रभाष्यपुराणादीनांवेदार्थत्वादेवतद्भिन्नत्वाभावःप्रदर्श्यते वेदार्थरूपशास्त्राणीति सर्वेषांवेदानुसारिणां वेदार्थरूपाण्येवशास्त्राणिभवंति तत्रतावद्वेदार्थवर्णनेतुसुगमतयाबोधहेतुर्भाषैवभवेत् २४४ देववाण्याऽर्थो क्तौगौरवइतिप्रदर्श्यते देववाण्याइति आदौदेवभाषयार्थकरणंपुनःस्वभाषयाजनबोधइतिप्रयासद्वैगुण्याद्गौ रवमितिभावः २४५ आदितएवभाषार्थकरणेतुलाघवमित्युपसंह्रियते तस्मादिति तत्रनिःप्रयासजनबोधे-

वेदार्थरूपशास्त्राणिसर्वेषामेववेदिनां वेदार्थवर्णनेतावद्भवेद्भाषास्फबोधिनी २४४ दे
ववाण्याकृतेप्यर्थेपुनस्तस्यापिभाषया जनानांबोधनंकार्य्यंवृथातद्गौरवंभवेत् २४५ त
स्मादादितएवार्थेवेदानांभाषयाकृते सुगमोजनबोधःस्यात्तत्रलाघवमिष्यते २४६ भा
षायांनैवप्रामाण्यंचेत्तत्किंसंस्कृतेभवेत् तथाचेत्तुजैनबौद्धादिशास्त्रंप्रामाण्यतांव्रजेत् २४७

लाघवमितिहेतोस्तद्देवेष्यते गुरुणास्वीक्रियते २४६ भाषायांप्रामाण्याभावमाशंक्यसमाधीयते भाषाया मिति भाषायांप्रामाण्याभावंवदतायद्यत्संस्कृतंतत्तत्प्रमाणमितिव्याप्तिः यायाभाषोक्तिःसासानप्रमाणमिति चव्याप्तिर्दर्शितातत्राद्यव्याप्तौसाधारणानैकांतिकताजैनादिशास्त्रेऽभिधीयते तथाचेदिति तत्रप्रामाण्यलक्षण साध्याभावेपिसंस्कृतत्वसाधनदर्शनादेतेनद्वितीयव्याप्तौसूत्रभाष्यपुराणादिभाषार्थोक्तौव्यभिचारश्चसूचितइ तिभावः २४७

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

फलितमुच्यते तस्मादिति भाषयादेववाण्यावा वेदार्थस्यप्रामाण्यंतद्विरुद्धस्याप्रामाण्यमित्यध्यवसायात् हरिरूपेणगुरुणाभाषयाकृतोवेदार्थोगुरुग्रंथस्तारकइतिसिद्धं २४८ वस्त्रादिवेषविशेषेषुप्रमाणजिज्ञासायांतद्वैयर्थ्यमुच्यते लौकिकेइति २४९ वेषवस्त्राद्यनाग्रहस्यसर्वत्रसाम्यंप्रदर्श्यते सर्वैरिति यथारुचिवस्त्रादिधार्य्यतेइति

तस्माद्धेतोर्हिसच्छास्त्रंतदर्थोभाषयाकृतः हरिणागुरुरूपेणगुरुग्रंथोहितारकः २४८ लौकिकेवेषवस्त्रादौविकल्पस्तुनिरर्थकः देहयात्रार्थवस्त्रादिधार्यतेहि यथारुचि २४९ सर्वैर्नानकमार्गीयैःसिंहोदासीननिर्मलैः तथासंन्यासिभिश्चापिवैष्णवैःसांप्रदायकैः २५० आचार्य्याणांयदावेषवस्त्रादौस्यान्निबंधनं यथेष्टंपर्युधुर्नैववस्त्रादिसंप्रदायिनः २५१ यत्वन्येवैष्णवाःप्राहुर्नैवशंखादिधारणं शालग्रामादिपूजादिर्नैवास्तिचभवन्मते २५२

पूर्वेणैवान्वयः २५० आचार्य्याणामपितत्रानाग्रहोबोध्यते आचार्य्याणामिति निबंधनंनिर्बंधआग्रहइतियावत् आचार्य्याणांतत्राग्रहेतत्संप्रदायिनोनैवयथेष्टंपर्य्युधुरितिभावः २५१ वैष्णवानांसद्धर्माभावशंकानूद्यसमाधीयते यत्वन्यइतिद्वाभ्यां नानकमार्गीयान् प्रतिप्राहुरित्यध्याहृतेनान्वयः २५२ ७ ७ ७



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यतोनिषेधोनास्तिविधानंचपश्यामोतस्तेषांतदुपालंभकथनंवृथेतिभावः २५३ भाषागुरुवाक्यमेवतत्स्थानप्रद र्शनपुरःसरमभिनीयोच्यते वसंतेतित्रिभिः साक्षादितिश्रीमुखेनैवनतुस्वरूपांतरेणशालग्रामेत्युपलक्षणमर्च्चा देरपिविप्रानितिवैष्णवादिसाधूनामुपलक्षणं यथाहंप्रणमेविप्राननुकालंसमाहितः तथानमतयूयंभोअन्य- थामेसदंडभाक् मद्भक्तपूजाभ्यधिकासर्वभूतेषुमन्मतिरित्यादिभगवद्वचनात् २५४ नहिचिन्हमात्रा

तद्यथानोनिषेधोस्तिसद्धर्माणांगुरोर्मते विधानंचापिपश्यामःसाक्षान्नान
कश्रीमुखात् २५३ वसंतरागेनिर्द्दिष्टंसाक्षात्श्रीगुरुणास्फुटं शालग्रामंचविप्रां-
श्चपूजयद्वंयथाविधि २५४ विधार्य्यातुलसीमालारामनामजपान्विता भ
वाब्धितारणंरामनामप्लवसमाश्रयं २५५ दयांचसर्वभूतेषुकुरुध्वंहरितोषदां
किमर्थंक्रियतेदेहपोषमूषरसिंचनं २५६

र्थंदंभार्थंवामालाधार्या किंतुरामनाम जपान्विता रामनाम्नोभवतारकत्वमुच्यते भवाब्धीति २५५ सर्वधर्मपरांदयामुपदिशंति दयांचेति तत्फ लमाहुः हरितोषदामिति येनकेनप्रकारेणयस्यकस्यापिदेहिनः प्रसादंजनयेद्विद्वान्तदेवहरिपूजनमित्यादि वचनात् भक्तिप्रतिबंधकाध्यासमूलदेहपोषणादिवैयर्थ्यमाहुः किमर्थमिति वैयर्थ्येदृष्टांतऊषरेति २५६

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नश्वरत्वात्तद्रागेदोषमाहुः तैस्त्विति तैस्तत्तनुपोषणैरिति बहुवचनंप्रभृत्यर्थंतदादिपुत्रलालनाद्यैर्वृथाजन्म क्षयं किमिति क्रियतेयथापतमानभित्तौ चूर्णलेपनादिव्यर्थंतद्वत् लब्ध्वासुदुर्लभमिदंबहुसंभवांतेमानुष्य मर्थदमनित्यमपीहधीरः तूर्णंयतेतनपतेदनुमृत्युयावन्निःश्रेयसायविषयः खलुसर्वतःस्यात् एषाबु द्धिमतांबुद्धिर्मनीषाचमनीषिणांयत्सत्यमनृतेनेहमर्त्येनाप्नोतिमामृतमित्यादिवाक्येभ्यः २५७ गुरुवा

तैस्तुजन्मक्षयंकस्मात्क्रियतेतनुपोषणैः पतिष्यत्यहृढाभित्तिस्तत्रकिंचूर्णलिंपनम्
२५७ एवंगुरूपदेशेनक्रियतेह्यर्च्चनादिकं मंदकृत्यंविनिश्चित्याकृत्यतःशुद्धिसाधनं २५८
यैस्तुव्याख्यायतेमूढैःस्वकीयमतिदोषतः शालग्रामस्यपूजादेरूषरस्थानतावृथा २५९
सर्वग्रंथनिरूप्यस्यरामनाम्नोपिनिंदनं सर्वभूतदयायाश्चप्रसज्येततथासति २६०

क्यानुसृततदीयानांप्रवृत्तिरुच्यते एवमिति ननुदेशकालद्रव्यादिशुद्ध्यसंपत्त्याकथंप्रवृत्तिस्तत्रोच्यते मंदेति अ- करणात् मंदकरणमपिश्रेयइतिन्यायेनतथानिश्चित्यार्चनादिक्रियतेइत्यन्वयः २५८ कैश्चिद्गुरुवाक्यस्यान्यथाव्या ख्यानमालिख्यनिराक्रियते यैस्त्वित्यादिभिः अन्यथाव्याख्यानेहेतुस्वकीयेति शालग्रामस्यपूजादेरूषरस्थान- ४१
तातत्साहश्यंयद्व्याख्यायतेतंवृथातेषामपितत्रेष्टसिद्ध्यदर्शनात् २५९ किंचतद्व्याख्यानेसमस्तगुरुग्रंथ

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विरोधइत्यपिप्रदर्श्यते सर्वग्रंथेति यदाशालग्रामविप्रयोः पूजनंसुकृतिंतुलसीमालांरामनाम्नोः जप्यंभव सिंधुप्लवंसर्वभूतदयांचसहैवैकस्मिन्नेवपद्येनिर्दिश्यतद्विषयमेवऊषरसिंचनंकिमर्थंक्रियते इतिवाक्यांतरंमन्वे ततथासतितदक्षिमंतुः सर्वगुरुग्रंथापाद्यरामनाम्नः सर्वभूतदयायाश्चनिंदनंप्रसज्येत २६० तत्प्रसक्तौहेतु रुच्यते तयोरिति तयोर्भूतदयारामनाम्नोर्वाण्यामेकस्मिन्पद्यभागेसहप्रयोगात् तस्माद्त्रपूजाविहितेति

तयोःप्रयोगतोवाण्यांशालग्रामादिपूजया ततोऽत्रविहितापूजानिषिद्धंदेहलालनं २६१
देशकालादिसामग्रीशुद्ध्यभावसमीक्षया कलौपूजाद्यशक्यत्वात्केचित्तुतदुपेक्षया २६२
विष्णोर्गुणानुकथनंश्रवणंनामकीर्तनं क्रियतेऽतिप्रयत्नेनरागतस्तत्परत्वतः २६३ वै
ष्णवानांतुबाह्यानांचिन्हानांनैवधारणं दृश्यतेनानकपथिप्रायस्तत्तुनदूषणम् २६४

मालाधारणादेरप्युपलक्षणंदेहलालनमेवोषरतयानिषिद्धमितिसिद्धं २६१ एवंचेत्प्रायःस्तन्मतेकिमित्यधिकप्रचारोनास्तीत्यपेक्षायामुच्यते देशकालादीतिद्वाभ्यां श्रवणंकीर्तनंविष्णोःस्मरणंपादसेवनं अर्चनंवंदनं दास्यंसख्यमात्मनिवेदनमिति तुल्यविहितंनवविधभक्तौसामग्रीशुद्ध्यसंपत्यार्चनमेकमुपेक्ष्यान्यच्छ्रवणाद्यति प्रयत्नेनक्रियतएवेतिभावः २६२ २६३ बाह्यचिन्हाभावशंकापूर्वोक्तानूद्यसमाधीयते वैष्णवानामिति २६४

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नदूषणमिति या प्रतिज्ञा सा वैष्णवग्रंथगतस्मृतिप्रमाणेनापाद्यते वैष्णवइत्यादिद्वाभ्यां तद्विभागमेवदर्श
यति बाह्यस्त्विति शंखचक्राभ्यांतच्चिन्हधारणेन वीतरागतोरागाद्यभावेन २६५ तेषांतयोरांतरत्वमुच्यते
आंतराइति २६६ आंतर्भावसत्वेबाह्यानामनावश्यकत्वमुच्यते यदात्विति २६७ श्रीगुरुमतेइष्टानिर्णय

वैष्णवोद्विविधःप्रोक्तोबाह्यआंतरएवच बाह्यस्तुशंखचक्राभ्यामांतरोवीतराग
तः२६५ इतिश्रीवैष्णवानांहिसारसंग्रहएवहि ग्रंथेस्मृत्यैवनिर्णीतंआंतराए
वतेकिल २६६ यदातुह्यांतरोभावस्तेषांविष्णौसुपुष्कलः तदाबाह्येषुचिन्हे
षुकिंवृथाग्रहतोभवेत् २६७ येस्तुकैश्चिद्वृथाऽज्ञानादुच्यतेश्रीगुरोर्मते नवि
द्यतेस्कनिर्णीतइष्टदेवइतिस्फुटं २६८ तेषांतत्कथनंसम्यग्वाण्याअर्थासमी
क्षणात् लिंगैःषड्भिर्गुरोर्ग्रंथेइष्टोविष्णुर्मतोयतः २६९

माशंक्यसमाधीयते ये
स्त्विति सार्द्धेन येस्तुश्रीगुरोर्मतेसुनिर्णीतइष्टदेवोनविद्यते इत्युच्यते यतस्तेषांतत्कथनंवाण्याःसम्यग
र्थासमीक्षणादतस्तैःस्फुटंवृथैवाज्ञानादुच्यतेइत्यन्वयः २६८ वाण्यास्तात्पर्यमुच्यते लिंगैरिति यतोवि- ४२
ष्णुरेवगुरोर्ग्रंथेतात्पर्य्यावधारकैःषड्भिर्लिंगैरिष्टोमतः २६९ ७ ७ ७

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

लिंगान्येवोच्यंते उपक्रमोपसंहाराविति प्रकरणापाद्यस्याद्यंतयोःकथनमुपक्रमोपसंहारलक्षणमेकमे
वलिंगंतस्यमध्येपुनःपुनरुक्तिरभ्यासः तमृतेपुरुषार्थासिद्ध्युक्तिरपूर्वतातत्प्रयोजनोक्तिःफलंतत्प्रशंसन
मर्थवादस्तस्ययुक्तिभिरापादनमुपपत्तिरितिषड्कंतात्पर्य्यनिर्णयेलिंगं २७० तत्राद्यंलिंगमुच्यते आ-

उपक्रमोपसंहारावभ्यासोऽपूर्वताफलं अर्थवादोपपत्तीचलिंगंतात्पर्यनिर्णये
२७०आदावंतेगुरोर्ग्रंथेविष्णुरेवहिगीयते विष्णुरेवहिमध्येपिगेयःसर्वत्रवर्णितः
२७१विष्णुनाम्नाविनानास्तिगतिरेवंप्रघोषणात् अपूर्वताख्यलिंगंहितृतीयंस्य
ष्टमीर्यते २७२ हरेर्नाम्नैवमुक्तिःस्याद्भोगोपीतिफलंस्फुटं विष्णुप्रशंससर्वत्र-
ह्यर्थवादःस्फुटःकिल २७३ आपादिताहरेर्भक्तिर्ग्रंथेनानोपपत्तिभिः षड्लिंगै-
स्तादिष्टत्वेतात्पर्यंगम्यतेध्रुवं २७४

दावंतेइति अभ्यासःप्रदर्श्यते विष्णुरेवेति २७१ अपू
र्वतानिरूप्यते विष्णुनाम्नेति २७२ फलंनिर्दिश्यते हरेर्नाम्नेति तत्रमुख्यावांतरभेदेनफलद्वैविध्यमुच्य
ते मुक्तिरित्यादि मुक्तिर्मुख्यंनित्यपरिपूर्णानंदात्मकत्वात् भोगोवांतरंनानादुःखसंमिश्रनश्वरसुखत्वात् अ
र्थवादोनिगद्यते विष्णुप्रशंसेति २७३ उपपत्तिरुपपाद्यते आपादितेति नानोपपत्तिभिर्विधयुक्तिभि

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रितिउपसंह्रियते षड्भिरिति तदिष्टत्वेविष्णोरेवेष्टदेवत्वेतात्पर्य्यमभिप्रायः ध्रुवंगम्यतेऽगतंसंदेहंभाति
२७४ श्रीनानकमतेयुगलोपासनाभावेनोपासनरीतिविरोधंतंत्रवाक्यंप्रमाणोक्तिपूर्वकंशंकते गौरतेजोवि
नेतित्रिभिः गौरतेजःश्रीराधाजानक्यादि श्यामतेजो हरिकृष्णारामादि शिवेइतिसंबोधनं २७५ वाक्यस्था
नंतद्वाक्याभिप्रायंचाह इतिसंमोहनइति संमोहनतंत्रेगोपालसहस्रनामस्तोत्रेगौरतेजोबोध्यश्रीराधादि

गौरतेजोविनायस्तुश्यामतेजःसमर्च्चयेत् जपेद्वाध्यायतेवापिसभवेत्पातकीशि-
वे २७५ इतिसंमोहनतंत्रेकृष्णनामसहस्रके श्रीराधादिविनाविष्णोर्भक्तिःसम्यग्निषेधिता २७६ यस्माद्विनानकग्रंथेश्रीराधादिरतिर्नहि तस्मात्नोपासनारीतिरिति
कश्चिद्वदेद्यदि २७७ इतितत्कथनंतंत्रवाक्यार्थाज्ञानतोमतं अन्यथैवंप्रतिज्ञाय
कथंराधांविनाहरेः २७८

विनाश्यामतेजोबोध्यविष्णोर्भक्तिर्निषेधिता २७६ यदर्थं
प्रमाणोपन्यासस्तांशंकामुद्घाटयति यस्मादिति तस्मात्तंत्रप्रमाणविरोधात् २७७ समाधीयते इतितदिति
ननुनिरूपितएवार्थःकिमित्यर्थाज्ञानंतत्रोच्यते अन्यथेति वाक्यार्थाज्ञानाभावेएवंश्रीराधादिविनाविष्णु
भक्तिनिषेधंप्रतिज्ञायराधादिविनाकेवलानिहरेरेवनामानिकथंकीर्तयेदित्युत्तरेणान्वयः २७८ ४३

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तत्रहेतुरुच्यते व्याहतत्वतइति तन्निषेधंविधायतत्करणेस्वोक्तिव्याघातात् अन्यत्रापिवेदेतिहासपुराणादौ
केवलविष्णुभक्तेरेवनिरूपणदर्शनेनतत्रदोषोक्तिर्नसंभवतिनहिविधिस्पृष्टेनिषेधःस्पृशतीतिन्यायादित्यभिप्रे
त्योच्यते नारायणोपनिषदीत्यादिसार्द्धेन २७९ २८० तर्हिकोवातदर्थइत्यपेक्षायांन्यायदर्शनपूर्वकंतद-
र्थमुच्यते शब्दक्रमादिति शब्दक्रमोत्रपदेषुश्रूयमाणक्रमस्तस्मादर्थक्रमस्त्ववाधितार्थोपपत्यनुसृतशब्दान्वयो

कीर्तयेत्केवलान्येवनामानिव्याहतत्वतः नारायणोपनिषदितापनीयादिषुश्रुतौ २७९
श्रीमद्भागवतेविष्णुपुराणेभारतादिषु केवलैवहरेर्भक्तिरुपदिष्टाकथंभवेत् २८० त
स्माच्छब्दक्रमादर्थक्रमोहिबलवान्भवेत् इतिन्यायंसमाश्रित्यह्येवंतस्यान्वयोमतः
२८१ श्यामतेजोविनायस्तुगौरतेजोर्च्चनादिकं कुरुतेविष्णुवैमुख्याच्छाक्तत्वात्पातकी
तुसः २८२

बलवानितिविद्वज्जनप्रसिद्धोन्यायः अन्यथाशब्दक्रमस्यैवबलवत्वेपदच्छेदःपदार्थो
क्तिर्विग्रहोवाक्ययोजनाआक्षेपस्यसमाधानंव्याख्यानंपंचलक्षणमितिवाक्यसंग्रहीतवाक्ययोजनाख्यान्वय-
एवसर्वत्रविप्लवेततस्मादेतन्न्यायानुसारेणतस्यतंत्रवाक्यस्यैवमन्वयोमतः २८१ अन्वयएवप्रदर्श्यते श्या
मेति अर्च्चनादीत्यादिपदेनजपध्यानग्रहणंतद्यःकुरुतेसशाक्तत्वात्पातकीभवेत् ननुसौराःशैवाश्चगाणेशामा

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

 

मकाः शक्तिपूजकाः मामेवयांतिते सर्वइति भगवद्वचनात्कथंशाक्तत्वात्पातित्वंतत्रोच्यते विष्णुवैमु
रव्यादिति वासुदेवंपरित्यज्ययोन्यंदेवमुपासते तृषितोजान्हवीतीरेकूपंखनतिदुर्मतिरितिवाक्ये यथानान्य
देवयजनदोषोदेवानांविष्ण्वंगत्वात्तथात्रापिनशाक्तत्वप्रयुक्तोदोषः किंतूभयत्रविष्णुवैमुख्यादेवदोषइति
भावः २८२ ननुकथंसर्वेषांयुगलोपासनाप्रवृत्तिः कथंनानकस्याप्रवृत्तिस्तत्रोच्यते युगलेत्यादिद्वाभ्यां
तत्रहेतुर्भोगेत्यादि २८३ भोगापवर्गहेतुत्वंविभज्यते श्रियइति एकभक्तौहेतुरुच्यते येत्विति २८४

युगलोपासनाश्रेयस्करीयद्यपिवर्णिता भोगापवर्गहेतुत्वात्सर्वलोकेषुसंमता २८३
श्रियोभोगेहिप्राधान्यंविष्णोर्मुक्तौनसंशयः येतुभोगेसुनिर्विण्णाविष्णुमेवभजंतिते
२८४ किंचमानसध्यानंहिभक्तिःप्रत्ययसंततिः सामंजस्यंप्रमेयैक्येभवेत्तस्याद्वयो
र्नहि २८५

निमित्तांतरंचाभिधीयते किंचेति सापरानुरक्तिरीश्वरेइति भक्तिशास्त्रसूत्रकारभग
वच्छांडिल्यसूत्रात् तत्रप्रत्ययैकताननताध्यानमितिभगवत्पतंजलिसूत्रात् सत्वएवैकमनसोवृत्तिः स्वा
भाविकीतुयाअनिमित्ताभागवतीभक्तिःसिद्धेर्गरीयसी जरयत्याशुयाकोशंनिगीर्णमनलोयथेति भग ४४
वत्कपिलवाक्याच्च मानसध्यानंभक्तिःसाचप्रत्ययस्यमनोवृत्तेः संततिःध्येयैकाकारप्रवाहस्तद्रूपाईश्वरे

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

हरौयानुरक्तिरन्नुपुनः पुनारक्तीरागाकारप्रत्ययसंततिः सोनमित्यादिवचनैर्निर्गुणभगवत्स्वरूपात्मकेतद्धा
यानांवृत्तीनामेकतानतासंततिरेवध्यानमितिपातंजलिसूत्रादृपेक्षानदृश्यतेइतिवाच्यं सर्वोऽव्येतिएकमन-
सइत्येकाकारचित्तस्येतिपदाभ्यामन्याकारप्रत्ययानंतरितत्वाध्येयविषयेकमित्यानिभक्तांतरमनपेक्ष्यस्वा
भाविकप्रवृत्तिमती|याभागवती भगवदेकाकारावृत्तिः साभक्तिः सिद्धिर्मुक्तिस्तद्धेतुत्वात्सर्वान्यसाधनेभ्यो
गरीयसीतद्धेतुत्वमेवाह जरयतीतियाभक्तिः स्वरूपापरोक्षज्ञानजननद्वाराम्नुकोशमविद्यादिपंचसंघा

क्रियतेयुगुलोपास्तिर्यैस्तैरप्येकताद्वयोः मतास्यादन्यथात्विष्टभेदेभक्तिर्विभि
द्यते २८६ तस्माच्छ्रियोऽस्यशक्तित्वाद्विष्वभेदविवक्षया विष्णुरेवमतःस्वेष्टोभ
क्तौलाघवमिच्छता २८७

तंस्वरूपावरकंजरयतीबाधयतीत्यर्थः तथाचभक्तेःप्रत्ययसंत
तिरूपत्वात् तस्याःसामंजस्यंसौष्टवंप्रमेयैक्य एवभवेन्नहिद्वयोरितितदैक्यमवधार्यैकभक्तिःस्वीकृते
तिभावः २८५ हरिप्रिययोरेकत्वस्यसर्वसंमतत्वमप्युच्यते क्रियतेइति विपक्षेबाधकःप्रदर्श्यते अन्य
थात्विति २८६ उपसंह्रियते तस्मादिति सर्वसंमतत्वात् शक्तितदाश्रययोः प्रथकसत्तायाःकाप्यदर्शने
नास्यशक्तित्वादेवविश्वभेदाभिप्रायेणभक्तेरेकध्यानेलाघवमिच्छताविष्णुरेवस्वेष्टोमतः २८७

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

केनभावेनगुरोर्विष्णोर्भक्तिस्तत्रोच्यते सखीभावस्येति गुरोःसखीभावस्यैवप्राधान्यमितितद्वाण्यांदृश्य तेभातिकथंभातीत्यपेक्षायामुच्यते प्रायइति २८८ कथंतर्हिनतदीयानांसखीभावेएवसर्वेषांप्रवृत्तिरित्याकांक्षायामुच्यते गुरोर्नास्तीति अथापिसखीभावप्राधान्येपिदास्यवात्सल्याद्यन्यभावविवर्ज्जनेगुरोराग्रहोन ह्यस्ति अतस्तत्तद्भावेषुयथेष्टंतदीयानांप्रवृत्तिरितिभावः अनाग्रहेहेतुद्वयमुच्यते तत्सर्वेत्यादि २८९ ननु

सखीभावस्यप्राधान्यंगुरोर्वाण्यांहिदृश्यते प्रायःसर्वगुरोर्ग्रंथेतद्भावस्यैवकीर्तनात्
२८८ गुरोर्नास्त्याग्रहोथापिह्यन्यभावविवर्ज्जने तत्सर्वभावमाधुर्य्यात्वैचित्र्याज्जन-
चेतसां २८९ तंयथायथोपासतेतदेवभवतिश्रुतिः विष्णुभक्तिप्रकारेषुप्रमाणंसर्व
तोमता २९०

विष्णोरेकस्यैवध्येयस्ययथेष्टंनानाविधोपासनेकिंमानमित्यपेक्षायामुच्यते तमिति तंयथायथोपासतेतदेवभवतीत्यसंकुचितोक्त्यानकश्चित्सख्यदास्यवात्सल्यादिकसंख्यानियमोभगवद्धामवृक्षपक्षिभृंगादीनामपितत्तद्भावोपासनाफलत्वेन तद्भावसंख्या[illegible] नचतत्तद्योनीनांपाप-फलत्वमितिवाच्यं नकर्मिणस्तांगतिंमाप्नुवंतीत्यादिपुण्यशील[illegible]कोशंनिगीर्णमनसः पापिनांतत्प्रवेशवादिनोलज्जास्पदत्वात् नचकथंतदुपासकानांतमोव्याप्तिः संततिःध्येयैकाकारप्रवाहस्तद्रूप। इत्यरे ४५

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रितिवाच्यं नयत्रसत्वंनरजस्तमश्च नवैविकारोनमहान्प्रधानमित्यादिवचनैर्निर्गुणभगवत्स्वरूपात्मकेतद्धा मनितच्छंकायाएवतमोमूलत्वात् नचलोकेकस्यापिमंदस्यापितथापेक्षानदृश्यतेइतिवाच्यं सर्वोत्कृष्टस्यब्रह्म- णएवतद्भूरिभाग्यमिहजन्मकिमप्यटव्यां यद्गोकुलेपिकतमांघ्रिरजोभिषेकमित्यादिना तथापरमभागवत स्योद्धवस्य आसामहोचरणरेणुजुषामहंस्यांवृंदावनेकिमपिगुल्मलतौषधीनामित्यादिना तथाप्रार्थनादर्शना त्तस्मात्सर्वभावानांविष्णोश्रुतिसंमतत्वात्परमानंदस्वरूपभगवत्पर्य्यवसायित्वेनमधुरत्वाच्चनतद्वर्ज्जनमि तिभावः नचाप्रतीकालंवनान्नयतीत्यादिसूत्रेणप्रतीकालंवनशून्यानहंग्रहोपासकानेवामानवःपुरुषोन

येयथामांप्रपद्यंतेतांस्तथैवभजाम्यहं इतिस्मृतिश्चसर्वेषुप्रमाणंतद्विधेषुहि २९१

यतीतिबादरायणसिद्धांतात्कथंतत्तद्भाववतांतद्धामप्राप्तिरितिवाच्यं अहंहरिसखीअहंहरिदासइत्यहंग्रहोपास कत्वात्तत्तद्भाववतांनचतथापितेषांब्रह्मण्यहंग्रहाभावान्नतद्धामप्राप्तिरितिवाच्यं भगवत्सखीदासपार्षदादी नामपिब्रह्मस्वरूपात्मकत्वात्तेषांब्रह्मण्यहंग्रहोपासकत्वोपपत्तेः २९० तंयथायथोपासतेइत्यत्रश्रौततच्छ ब्दस्यविष्णुपरत्वमवधारयितुंश्रुत्यर्थानुसारिणीस्मृतिरपिप्रदर्श्यते येयथामामिति अत्रश्रौततच्छब्दस्थ- लेकृष्णस्यतच्छब्दप्रयोगेणश्रुतौविष्णुरेवतदर्थः येयथायद्यद्भावेनप्रपद्यंतेतेमामेवप्रपद्यंते इत्युक्त्यातत्स

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

र्वभाववतांब्रह्मण्येवाहंग्रहइतिसिद्धं तदेव भवतीतिश्रुतिभागव्याख्यातांस्तथैव भजाम्यहमिति २९१ शंकांतर मुद्भाव्यते यदिकश्चिदिति जंतवइत्यसामर्थ्योक्तिः साक्षाद्धरिप्रियात्वमित्यतिदौर्लभ्यं तथाचततहरिप्रियाश्र यंविनाकथमर्हतिनकथमपीतिभावः २९२ समाधीयते सत्विति वाच्यमेवोच्यते स्वसामर्थ्या

यदिकश्चिद्वदेदेवंविनाहरिप्रियाश्रयं साक्षाद्धरिप्रियात्वंतुकथमर्हतिजंतवः २९२ स तुवाच्यःस्वसामर्थ्यादशक्यंदास्यमप्यथ तस्यानुग्रहतोऽशक्यंनप्रियात्वमपिध्रुवं २९३ तदनुग्रहमाश्रित्ययथायस्यमनोरुचिः तथैवोपासनाकार्य्याश्रुतिस्मृतिप्रमाणतः २९४ यत्तुकश्चिद्वदेदेवं प्रियासापत्न्यभावतः कथंसिद्ध्येत्सखीभावोविनातस्याःपदा श्रयात् २९५ तस्यशंकावृथैवेयंतन्माहात्म्याप्रबोधतः नैवेश्वर्य्यास्तुसापत्न्यंमात्सर्यं संभवेद्यतः २९६

दिति स्वसामर्थ्यात्तुहरिप्रियात्वमेवाशक्यमितितुन वाच्यंकिंतुदास्यमप्यशक्य मेवाथतस्यानुग्रहतोहरिप्रियात्वमपिनाशक्यमितिध्रुवमेव २९३ निष्कृष्टार्थउच्यते तदनुग्रहमिति तंयथायथेत्या द्युक्तंमानंस्मार्यते श्रुतीतिस्पष्टमन्यत् २९४ प्रियामात्सर्य्यमाशंक्यसमाधीयते यत्वित्यादिद्वाभ्यां तस्याःपदा- ४६
श्रयाद्विनाप्रियासापत्न्यभावतःसखीभावःकथंसिद्ध्येदितियदिकश्चिद्वदेत् २९५ तस्यपुरुषस्येयंशंकातस्याभग

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वत्सामाहात्म्याप्रबोधतो वृथैव वृथात्वेतदसंभवोहेतुरुच्यते नैवेति यतईश्वर्य्याः मात्सर्य्यं तद्धेतुकं सापत्न्यंच नसंभवेदतोवृथेत्यर्थः २९६ तदेवमात्सर्य्याभावंप्रमाणोक्तिपुरःसरंकैमुत्यन्यायेनदृढीक्रियते नक्रोधइत्या दिद्वाभ्यां मात्सर्य्यंपरसरव्यसहिष्णुत्वंलोभः परकीयद्रव्याद्यभिलाषा क्रोधस्तद्ग्रहणप्रतिबंधकेद्वेषोऽन्याच याअशुभामतिस्तत्सर्वदोषजातंपुरुषोत्तमेभक्तानांनभवंति किंभूतानांकृतानिसर्वाणि पुण्यानियैः अहोबत

नक्रोधोनचमात्सर्य्यंनलोभोनाशुभामतिः भवंतिकृतपुण्यानांभक्तानांपुरुषोत्तमे
२९७ इतिस्मृत्यानभक्तानांयदामात्सर्य्यसंभवः तदासाक्षात्प्रियायावैतस्यसं
भावनाकुतः २९८ प्रत्युतविष्णुरूपायाविष्णुभक्तिःसुसंमता विष्णुभ
क्तेषुतस्यावैपराप्रीतिर्भवेद्ध्रुवम् २९९ ॐ ॐ ॐ

श्वपचोऽतोगरीयान्यज्जिह्वाग्रे वर्ततेनामतुभ्यं तेपुस्तपस्तेजुहुवुः सस्नुरार्य्याब्रह्मानूचुर्नामगृणंतियेते तथाजन्मांतरेष्वपिकृतानिपुण्यानियैः जन्मांतरसहस्रेषुतपोयोगसमाधिभिः नराणांक्षीणपापानांकृष्णेभ क्तिःप्रजायते इत्यादिवाक्यैर्भक्तेःसर्वपुण्यात्मकत्वात्तत्फलरूपत्वाच्च २९७ २९८ मात्सर्य्यस्यकाकथाप्रत्युततद्भक्ते षुतत्प्रियानुग्रहएवभवतीतिदर्शयते प्रत्युतेतिद्वाभ्यां यतःसाविष्णुस्वरूपाऽतस्तस्याविष्णुभक्तिरेवसुसंमता २९९

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

 

विष्ण्वाराधनेनैवतुष्टासाहरिप्रियापरांनिरतिशयांभक्तिंप्रयच्छति ददातिअतस्तस्याअनुग्रहादेवसर्वेषांयुगलो
पासकानांविष्ण्वेकपराणांचसख्यभावःसिद्धेत् ३०० किंचयोलोकेपिमात्सर्य्यहेतुस्तस्यतत्रासंभवादेवन
मात्सर्य्यशंकागंधोपीतिप्रदर्श्यते स्वभोगेति अन्यभोगप्रदानेपत्युः सामर्थ्यस्यसंक्षयाद्यास्वभोगक्षयभी
तिस्तयालोकेपिसपत्न्यादौमात्सर्य्यंभवेत् सशक्तिसंक्षयोहरौनास्त्येवपराऽस्यशक्तिर्विविधैवश्रूयतेस्वाभा

विष्ण्वाराधनतुष्टासापरांभक्तिंप्रयच्छति सर्वेषांसख्यभावोतःसिद्धेत्तस्याह्यनुग्रहा
त् ३०० स्वभोगक्षयभीत्याहिपतिसामर्थ्यसंक्षयात् भवेल्लोकेपिमात्सर्य्यंनहरौशक्ति
संक्षयः ३०१ सर्वदोषविहीनत्वात्सख्यभावोगुरोर्मतः तस्माद्विष्णोसखीभावःप्रा
योग्रंथेनिरूपितः ३०२ यदिकश्चिद्वदेदेवंनानकस्यगुरुर्हरिः कथंतस्मिन्सखीभाव
स्तस्यस्यात्तर्हितच्छृणु ३०३

विकीज्ञानबलक्रियाचेतिश्रुतेः ३०१ फलितमुच्यते सर्वेति शंकि-
तदोषाणांनिरस्तत्वाद्दोषांतरसंभावनायाअप्यनुत्थानेनसर्वदोषविहीनत्वात् सख्यभावएवयतोगुरोर्मतस्त
स्मात् सर्वजनानुकंपयासएवप्रायोबाहुल्येनग्रंथेनिरूपितः ३०२ गुरुत्वेसख्यभावासंभवमाशंक्यसमाधीय
ते यदिकश्चिदित्यादित्रिभिः तस्मिन्गुरुरूपेसखीभावेनपतिबुद्धिःकथंस्यान्नकथमपितदितितत्समाधानंस ४७

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रमाणंशृणु ३०३ स्मृतिप्रमाणमुच्यते गुरुरग्निरिति ३०४ स्मृत्यवगतार्थोऽभिधीयते इतीति स्मृत्यापतिवि
षयकगुरुबुद्ध्युपदेशात्तद्बुद्ध्योर्विरोधाभावाध्यवसायात् किलनिश्चयेन गुरोर्नानिकस्यहरिरेवपतिः स्वेष्टोगुरु
श्च ३०५ फलितमभिधीयते तस्मादिति इष्टपत्याद्यखिलभावेनविद्यमानत्वात् अनन्याअन्यत्वभ्रमशू
न्याऽतएवानपायिनीस्वात्मनिकदाचिल्लीत्यनपायात् तस्याःप्रामाणिकत्वायोच्यते श्रुतिगीतेति आत्मेत्येवोपा

गुरुरग्निर्द्विजातीनांवर्णानांब्राह्मणोगुरुः पतिरेकोगुरुःस्त्रीणांसर्वेषामतिथिर्गुरुः ३०४
इतिस्मृत्यातुनारीणांपतिरेवगुरुर्मतः हरिरेवपतिःस्वेष्टोगुरुःस्वात्मागुरोःकिल ३०५
तस्मात्सर्वप्रकारेणगुरोर्भक्तिर्हरौमता अनन्याखिलभावेनश्रुतिगीतानपायिनी ३०६
सख्यभावात्पतिर्विष्णुश्चेष्टस्त्वीश्वरभावतः गुरुस्तुस्वोपदेशेनस्वात्मासाक्षात्स्वरू
पतः ३०७

सीतयोऽन्यांदेवतामुपासते अन्योसावन्योहंनसवेदयथापशुरित्यादिश्रुतेः ३०६ सनि
मित्तंतद्भावाविभज्यप्रदर्श्यते सख्यभावादिति नचसख्यभावेमाधुर्य्यरसेईश्वरभावस्यप्रतिबंधकत्वंरा
ज्ञऐश्वर्य्यंदृष्ट्वा ग्राम्याणामतदीयानांमाधुर्य्यरसप्रतिबंधेपितद्राज्ञोमाधुर्य्यरसप्रतिबंधादर्शनात् प्रत्युत
तदैश्वर्य्यवृद्धौतस्यारसवृद्धेस्तदैश्वर्य्यस्यक्वचिद्ध्रंशसंभावनायामेवरसप्रतिबंधस्यचसंभवात् किंचैश्व-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

र्य्याभावेजीवत्वापत्यानश्वरत्वादिहस्यानिरतिशयानंदाभीप्सूनामिहामुत्रविरक्तानांसतांतत्रभावस्यैवोद-
यासंभवात् ३०७ अभेदेभक्त्यसंभवमाशंकते यस्त्वित्यादिद्वाभ्यां सापरानुरक्तिरीश्वरे इतिसूत्रात्पराभक्ति
रनुरक्तिशब्दाभिधेयाप्रेमलक्षणैवअपरातुनवधा श्रवणंकीर्तनंविष्णोःस्मरणंपादसेवनं अर्च्चनंवंदनंदास्यं
सख्यमात्मनिवेदनमित्यादिप्रह्लादवादात् ३०८ एवंपरापरभक्तिस्वरूपंदर्शयित्वा अभेदेतदसंभवमाह अभे

यस्तुब्रूयाद्भवेद्भक्तिःपराहिप्रेमलक्षणा अपरानवधाज्ञेयासख्यदास्यादिभावतः
३०८ अभेदेस्वात्मबुध्यातुकथंप्रेमापराभवेत् कथंदास्यादिभावश्चाभेदेसेवाद्यसंभ
वात् ३०९ सतुवाच्योवृथाप्रश्नस्त्वेवतदविचारतः आत्मन्येवाहिसर्वेषांपराप्रीतिर्हिदृश्य
ते ३१० तत्प्रेमात्मार्थमन्यत्रनैवमन्यार्थमात्मनि अतस्तत्परमंप्रेमत्येवंवृद्धैःसुसंमतं ३११

देइति अभेदेकःकस्यप्रियइतिविभागानुपपत्तिः पराभक्तिवाधिकासेवाद्यनुपपत्तिरपरायावाधिकेतिभावः ३०९
समाधीयते सतुवाच्यइति असंभवतर्के प्रत्यक्षानुभवेनबाधःप्रदर्श्यते आत्मन्येवेति ३१० तत्रवृद्धसंम-
तिरुच्यते तत्प्रेमात्मार्थमिति अन्यत्रपतिपुत्रादौयत्प्रेमतदात्मार्थंआत्मसंबंधंविनान्यपुत्रादौतददर्शनात् आ ४८
त्मनियत्प्रेमतदन्यार्थंनैवपुत्राद्यभावेपिनित्यसिद्धत्वात् इतिवृद्धैर्विद्यारण्यस्वामिभिःसुष्ठुश्रुत्यनुभवयुक्तिभिः
संभाव्यसंमतं ३११

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

हि

उक्तवृद्धवाक्येप्यश्रद्दधतांभेदाग्रहवतामस्वीकुर्वतांनास्तिकत्वापादनीनवा अरेसर्वस्यकामायसर्वंप्रियंभ
वति आत्मनस्तुकामायसर्वंप्रियंभवतीति वृहदारण्येमैत्रेयीब्राह्मणेबहुविस्तरेणसर्वोपसंहारवतीश्रुतिरेवा
र्थतस्सदर्श्यते नहीतिस्पष्टं ३१२ स्पष्टेपिश्रुत्यर्थेभेदग्रहमात्रेणकश्चिदन्योर्थोभविष्यतीति वृथाभिलषतांस्वा
त्मनोभागवतत्वमभिमन्यमानानांश्रुतेस्तदर्थपरत्वज्ञापकंश्रीमद्भागवताख्यानमेवसंक्षिप्यार्थतोभिधीयते द

नहिसर्वस्यकामायसर्वंभवतिप्रियं आत्मनएवकामायसर्वंप्रियमिति
श्रुतेः ३१२ दशमेवत्सहरणेश्रीमद्भागवतेतुहि कृष्णएवाभवत्सर्वबाल
वत्सादिरूपतः ३१३ तदागवांचमातॄणांस्वांगजेभ्योधिकांरतिं कृष्णेत
द्रूपिणिकृत्वाराजापृच्छत्सविस्मयः ३१४ ७ ७

शमेइत्यादिभिः भगवतातत्तन्मातॄणांगवांचस्वस्मिन् यशोदासदृशींवात्सल्यभावेनप्रीतिमालोक्य
स्वात्मनश्चप्रेमैकवश्यतामधिगम्य तासांतादृक्सुखमभिवांछताप्रेरितेनब्रह्मणा वत्सबालादिहरणेकृ
तेकृष्णएवसर्वगोपालबालवत्सादिरूपोभवत् ३१३ स्वांगजेभ्योब्रह्मणाहृतवत्सबालादिभ्यःसविस्म
योलोकव्यवहारविरुद्धत्वात्साश्चर्यः ३१४ श्रीसीतारामचंद्रायनमः ७

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्वानंगजेकृष्णेस्वांगजेभ्योधिकाप्रीतिः कथमभवदितिनृपप्रश्नेतदुत्तरंशुकःप्राह अत्रभक्तशिरोमणिरिति शुक
विशेषणेनतदुक्तकृष्णास्वात्मत्वेभक्तानांशंकानौचित्यंद्योतितं ३१५ शुकवाक्यान्येवपठ्यंते सर्वेषामित्याद्य
ष्टभिः हेनृपसर्वेषांभूतानांदेवनरतिरश्चांस्वात्मैववल्लभःप्रियः अन्यथाकुक्कुरस्यस्वभोजनायदेवभागान्नभ
क्षणंनस्यात् नचपुत्रवित्तगुर्वादीनांप्रेयस्त्वं इतरेपुत्राद्यास्तुतस्यात्मनएववल्लभतयातत्संबंधेनैवप्रियाअन्य-

स्वांगजेभ्योधिकाप्रीतिः कथंस्वानंगजेभवत् कृष्णेतदुत्तरंप्राहशुकोभक्तशिरोमणिः
३१५ सर्वेषामपिभूतानांनृपस्वात्मैववल्लभः इतरेऽपत्यवित्ताद्यास्तद्वल्लभतयैव
हि ३१६ तद्राजेंद्रयथास्नेहःस्वस्वकात्मनिदेहिनां नतथाममतालंबिपुत्रवित्त
गृहादिषु ३१७ देहात्मवादिनांपुंसामपिराजन्यसत्तम यथादेहःप्रियतमस्तथा
नह्यनुयेचतं ३१८

थापरपुत्रगुर्वादेरपितथाप्रियत्वापत्तेः ३१६ तदेवपुनर्दृढयितुमाहुः
तद्राजेंद्रेति स्वस्वकात्मनिस्वस्मिन् ३१७ स्वात्मनिप्रीत्यतिशयत्वेकिमुवाच्यंपरंपरयाव्यवहिताध्यासापन्नपु
त्राद्यपेक्षयासंनिहिताध्यासतयात्मत्वेनभ्रांतिप्रतिपन्नेदेहेपिप्रियतमत्वंदृश्यतेइत्याहुः देहात्मवादिनामिति
येचपुत्रादयस्तंदेहंअनुतत्संबंधिनस्तेतथाप्रियतमानभवंति ३१८ ७ ७



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पुनर्विवेकेन आत्मत्वाध्यासाभावे देहेपि तथा पूर्ववत्प्रीत्यभावमाहुः देहोपीति विवेकात्पूर्वं यद्यस्माद्देहे एवा त्मत्वाध्यासदार्ढ्याद्स्मिन् देहजीर्यत्यपि जीविताशा वलीयसी अभूत् विवेकेन तदध्यासनिवृत्तोयर्हि ममताभा ग्भवेत्तर्ह्यसौ देह आत्मवत्प्रियो न भवति ३१९ फलितं निगमयंति तस्मादिति तदर्थं आत्मार्थं ३२० नन्वात्मन्ये वप्रीतेर्निरतिशयत्वसिद्धावपि कृष्णे तत्प्रीत्याधिको किमायातं तत्राहुः कृष्णमेनमवेहीति एनं वेदांतसहकृतबु

देहोपि ममताभाक्चेत्तर्ह्यसौ नात्मवत्प्रियः यज्जीर्यत्यपि देहेऽस्मिन् जीविताशा बलीय
सी ३१९ तस्मात्प्रियतमः स्वात्मा सर्वेषामपि देहिनां तदर्थमेव सकलं जगदेतच्चराचरं
३२० कृष्णमेनमवेहि त्वमात्मानमखिलात्मनां जगद्धिताय सोप्यत्र देहीवाभाति मा
यया ३२१

द्ध्येव प्रेमसहकृतचक्षुषाविद्यावरणाभिभवे प्रत्यक्षमिव स्वप्रकाशतयाभासमानं कृष्णं श्याम सुंदरं रूपं यत्तत् प्राहुरव्यक्तमाद्यं ब्रह्मज्योतिर्निर्गुणं निर्विकारं सत्तामात्रं निर्विशेषं निरीहं सत्वं साक्षाद्विष्णुरध्यात्म दीप इत्यादिना मात्रापि तथा निरूपितं स्वप्ने प्रतीयमानानामसंख्यातजीवानां स्वप्नदृगेकात्मत्ववत् अखिलात्म नां भ्रांत्या स्वप्नवदेवनानात्वेन भासमानानां जीवानामात्मानं विद्धि अहमात्मा गुडाकेश सर्वभूताशयस्थित इत्यादि वचनात् ननु सच्चिदानंदात्मस्वरूपविग्रहत्वे देहदेही विभागाभावेपि कथं देही जीव इव तस्य प्रतीतिस्तत्राहुः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जगदिति मायया करुणया वात्सल्यशृंगारादिरसान्वितोपासनार्थं जगतांहितायससच्चिदानंदात्मविग्रहोपि देहीवाभाति ३२१ स्वप्नप्रतीतनानात्मनांस्वप्नदृगात्मत्ववदखिलात्मनामात्मत्वंनिर्दिश्य स्वप्नप्रपंचस्यस्वप्नदृगव्यतिरेकवत्सर्वप्रपंचस्यकृष्णाव्यतिरेकमाहुः वस्तुतइति कृष्णंवस्तुतः परमार्थतोजानतां अत्रलोकेस्थाष्णुस्थावरंचरिष्णुजंगमंचतदखिलंभगवद्रूपं इह कृष्णादन्यत्किंचननास्ति ३२२ स्वप्नदृश्यस्यतद्दृगव्यतिरेकवत्प्रपंचस्यदृश्यत्वादेवसर्वसाक्षिकृष्णाव्यतिरेकमुक्त्वानत्कार्य्यत्वादपितदव्यतिरेकमाहुः सर्वेषामिति सर्वेषांवस्तूनांघ

वस्तुतोजानतामत्रकृष्णंस्थाष्णुचरिष्णुच भगवद्रूपमखिलंनान्यदस्तीहकिंचन ३२२ सर्वेषामपिवस्तूनांभावार्थोभवतिस्थितः तस्यापिभगवान्कृष्णः किमतद्वस्तुरूप्यतां ३२३ इत्थमात्मस्वरूपत्वात्कृष्णेप्रीतिःसुवर्णिता अभेदेहिपराप्रीतिर्नभेदेतादृशीमता ३२४

टपटादीनांभावार्थः सत्तास्वरूपंभवतीति भवतिकार्य्यमस्मादितिभवत् कारणंतस्मिन्नेवस्थितः घटपटादीनांकपालतंत्वाद्यव्यतिरेकात् तस्यापितत्तत्कारणजातस्यकारणंभगवान्कृष्णः सर्वाणिचभूतानिनारायणादेवसमुत्पद्यंते नारायणेप्रलीयंतेइत्यादिश्रुतेस्तथाचनारायणएवेदंसर्वमितिश्रुतेरुक्तयुक्तेश्चकिमतत्तदन्यद्वस्तुइतिरूप्यतांनकिमपितदन्यदतः सर्वविषयाप्रीतिः कृष्णैकपर्य्यवसन्नेतिभावः ३२३ प्रमाणसिद्धोर्थःसंगृह्यते इत्थमिति यतःश्रीशु ५०

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

केनात्मस्वरूपत्वादेवकृष्णेप्रीतिर्वर्णिताऽतोऽभेदेएवपराप्रीतिर्भेदेत्वाद्दर्शीनमतेत्यन्वयः ३२४ अध्यासतारत
म्यतः प्रीतितारतम्यंप्रदर्श्यंते यथायथेति ३२५ श्रुत्याभेदोपास्तिनिषेधेनाप्यभेदे भक्तिसामंजस्यमित्यापा-
दितुंश्रुतयःप्रदर्श्यंते योन्यामित्यादिद्वाभ्यां देवस्यान्यत्वमेवव्याख्यायते अन्योसाविति ३२६ उत् अपिअ

यथायथात्मतादात्म्यंपुत्रदारादिगोचरं कल्पितंस्यात्तथाप्रीतिरध्यासात्तारतम्यतः ३२५
योन्यांदेवता मुपासतेह्यन्योसावन्योहमस्मीति नसवेदयथापशुर्भेदोपास्तिंनिषेध-
ति ३२६ उदरमंतरंकुरुते अथतस्यभयंभवति द्वितीयाद्वयंभवतीत्यादिवेदेसुघो
षणात् ३२७ नाविष्णुःकीर्तयेद्विष्णुंनाविष्णुर्विष्णुमर्च्चयेत् नाविष्णुःसंस्मरेद्वि-
ष्णुंनाविष्णुर्विष्णुमाप्नुयात् ३२८ इत्यादिस्मृतिभिश्चापिभेदोपास्तेर्निषेधतः विष्णुं
स्वात्मतयाध्यायन्सख्यदास्यादिभावयेत् ३२९

रंअल्पंअंतरंभेदं अल्पमपिभेदकर्तुःभयंभव
ति द्वितीयाद्भेदेनप्रतीताद्भयंभवतीत्यर्थः ३२७ स्मृतिरप्युच्यते नाविष्णुरिति विष्णुभेदमतिरित्यर्थः पादत्र
येभेदबुद्ध्याभक्तिप्रतिषेधश्चतुर्थेतत्फलाप्राप्तिः ३२८ उक्तप्रमाणाभिप्रायोनिगद्यते इत्यादीति कुर्वंतिहित्व-
यिरतिंकुशलाः स्वआत्मन्नित्यप्रियेइत्यादिनागोपीनां कोतिप्रयासोऽसुरबालकाहरेरुपासनेस्वेहृदिच्छिद्रव

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

 स्तत: स्वस्यात्मन: सख्युरशेषदेहिनांसामान्यत: किंविषयोपपादनैरित्यादिनाप्रह्लादादेश्चतथाध्यवसायात् 
३२९ क्षयाभावेनाव्यभिचारसंभवादप्यभेदेएवमुख्याप्रीतिरित्युपसंह्रियते अन्यत्रेति ३३० अभेदेएवपराभक्तिः प्रेमलक्षणानिर्णीयसेवादिभक्तिविचारमारभ्यते सेवापीति प्रातःकालादारभ्यकरमुखचरणादिक्षालन-स्नानादिसंपादनभोजनादिनाहोरात्रमतिरागतः सेवापियथानित्यंस्वस्मिन्स्यात्तथान्यत्रक्वचिन्नदृश्यते ३३१

अन्यत्रक्षीयतेप्रीतिःस्वस्मिन्नक्षीयतेक्वचित् अभेदोपासनेतस्मात्प्रीतिरव्यभिचारिणी ३३० सेवापिहियथानित्यंस्वस्मिन्स्यादतिरागतः स्नानभोजनपानाद्यैर्नतुथान्यत्र दृश्यते ३३१ गुरौतथेष्टदेवेपिशास्त्राज्ञाभयतःकिल पितृपुत्रादिषुस्वीयभोगमोक्षादिवांछया ३३२ तस्मात्प्रीतिश्चसेवाचाभेदेनित्यापरामता भेदेकामानुसारेणकादाचित्यदृढाक्वचित् ३३३

गुर्वादिसेवाया अपिकादाचित्स्याःस्वस्मिन्नेवपर्य्यवसानमुच्यते गुराविति गुर्वादौशास्त्रभयात्कदाचिद्यासेवासास्वमोक्षवांछयापुत्रादौभोगादिवांछयाभवति ३३२ फलितंनिरूप्यते तस्मादिति एवंप्रमाणयुक्तिभ्यांनिर्धारणात् प्रीतिःसेवाचाभेदेएव नित्याअव्युच्छिन्नापराउत्कृष्टाचमताभेदेतुकामानुसारेणतत्तारतम्येनकदाचिदेवक्वचिदेवसाप्यदृढैवस्यात् नतथासनीवाव्युच्छिना ३३३ 



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भेदवादिनांअपिव्यवहारेणोक्तार्थसंमतिःप्रदर्श्यते सर्वेष्विति द्वाभ्यां वयंभेदवादिनएवेतिवृथास्वस्वाग्रहेणाभे
दपरेष्वपियेआत्मीयाचार्य्याविष्ण्ववतारत्वेनतद्रूपामतास्तेएवभक्तसत्तमाः संमताः ३३४ स्वेषुआधुनिकेषुस्व-
स्वात्मसुतद्भेदवत्सु विष्णोरभिन्नत्वेपिस्वकल्पांत्यैवतद्भेदेनाभिमन्यमानेषुस्वाचार्य्यतुल्याप्रीतिः सेवाचनैवसंम
तातस्माद्यत्रयत्रविष्णुरूपत्वंतत्रतत्रतन्मुख्यप्रीतिमत्वंभक्तप्रधानत्वंचयत्रयत्रविष्णुभेदवत्वंतत्रतत्रन्यूनप्रीति

सर्वेषुसंप्रदायेषुभेदोपास्तिपरेष्वपि स्वस्वाचार्य्याहरेरूपासंमताभक्तसत्तमाः ३३४
स्वेषुतद्भेदवत्सुतुनस्वाचार्य्यसमामता विष्णुप्रीतिश्चसेवातोह्यभेदेपरमामता ३३५
अभेदवादिनांपक्षेत्वभेदोस्तिस्वरूपतः मनोवागादिभिर्भक्तिः सेवाकायात्स्वधर्म्म
तः ३३६

मत्वंतदतुल्यसेवकत्वंचेतिव्याप्तिसंप्रतिपत्तेरभेदेएवप्रीतिसेवयोः प्राधान्यंनतु भेदेकिंतुगौण
त्वमेवेति स्वरूपेणाभेदमेवस्वीकुर्वन्दास्यसख्यादिभावनाकार्य्याआत्मेत्येवोपासीतेत्यादिश्रुतेः ३३५ पुन
श्चाभेदवादेएवश्रुतिसंमताभेदबोधपरापरभक्तीनामुपपत्तिर्नभेदवादे इतिनानोपपत्तिभिरापाद्यते अभेदवा
दिनामित्यादिना अभेदवादिनांतत्वमसि अहंब्रह्मास्मि अयमात्माब्रह्मेत्यादिश्रुतिभिर्जहदजहल्लक्षणयास्वरूपे
एवसंमताभेदः स्वरूपतः स्यादेवदेवानांगुणलिंगानामानुश्रविक कर्मणांसत्वएवैकमनसोवृत्तिः स्वाभाविकीतु

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

या अनिमित्ताभागवतीभक्तिःसिद्धेर्गरीयसीत्यादिभिः सूक्ष्मेएवशरीरेसंमताभक्तिः मनोवागादिभिरितितदुपलक्षतेनसूक्ष्मेणस्यात् ब्राह्मणोयजेदित्यादिनातत्तज्जात्यालिंगितेस्थूलदेहेविहितंसेवादिकर्म्मकायात्स्यादेव ३३६ स्वमतेसर्वसंभाव्यपरमतेभेदबोधपरापरभक्त्योरसंभवोबोध्यते भेदवादिष्विति भेदवादित्वादेवाभेदासंभवो मुख्यप्रीत्यभावश्चेतिभावः ३३७ पुनःसिंहावलोकनन्यायेनाभेदपक्षेसेवायांऔपाधित्वंस्वाभाविकत्वंच

भेदवादिषुनाभेदःसंभवेच्छ्रुतिसंमतः नानुरक्तिःपराभक्तिर्भेदेमुख्यारतिःकुतः ३३७
सेवाप्यभेदपक्षेहिदेहाद्यौपाधिकीभवेत् देहादिष्वात्मतादात्म्याध्यासात्स्वाभाविकी
चसा ३३८ भेदवादिषुसेवापिकथंचित्संभवेन्नहि ईश्वरस्तुविभुस्तेषांजीवोऽणुःसंमत
स्तथा ३३९ विभ्वीश्वरस्यजीवेनाणुनासेवाभवेत्कथं कथंपुष्पादिसंगृह्यविभवेऽणुःस
मर्प्पयेत् ३४०

प्रदर्श्यते सेवापीति विवेकिनऔपाधिकीअविवेकिनोध्यासाद्देहेआत्मत्वाभिमानिनोदेहेकृतास्वाभाविकीचस्यात् ३३८ भेदवादिषुसेवनासंभवोभिधीयते भेदवादिष्विति असंभवमेवापादयितुंभूमिकोच्यते ईश्वरस्त्विति तेषांभेदवादिनांमतईश्वरोविभुस्तथाजीवोऽणुःसंमतः ३३९ किंमतस्तत्रोच्यते विभ्वीश्वरस्येति कातत्रानुपपत्तिस्तत्रोच्यते कथंपुष्पादीति ३४० ७ ७ ५२

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सेवोपपत्तिंशंकते देहादीति जीवस्यदेहोपाधिरादिपदेनेशस्यमूर्त्तिरूपोपाधिरेवमीशजीवयोस्तयोः संबंधात्से वास्यादेवतत्रसमाधीयते यद्येवमिति एवमभ्युपगमश्चेत्तर्हिसासेवा औपाधिक्येवभवेत् ३४१ भवतुतेनकि मित्यपेक्षायामुच्यते तथाचेति भेदवादिनांतथौपाधिकसेवास्वीकारेत्वभेदपक्षेप्रवेशः स्वाभाविकसेवारूपस्व मतहानिश्चस्यात् ३४२ एवंपरमतप्रवेशस्वमतत्यागात्मकदोषद्वयंदर्शयित्वासंबंधानुपपत्यौपाधिकसेवा-

देहाद्युपाधिसंबंधात्सेवास्यादीशजीवयोः यद्येवंतर्हिसेवासाभवेदौपाधिकीखलु ३४१
तथाचाभेदपक्षेहिप्रवेशोभेदवादिनां स्वाभाविकैवसेवादिस्वमतत्यागएवच ३४२ किं
चाध्यासिकसंबंधास्वीकारात्तन्मतेनहि कथंचित्संभवेत्सेवासंबंधस्यानिरूपणात् ३४३
अणोर्देहाद्युपाधेर्नसमवायःकथंचनः अकार्य्यकारणेद्रव्येसमवायोनकुत्रचित् ३४४

स्वरूपस्यैवासिद्धिलक्षणंदूषणांतरंनिर्दिश्यते किंचेत्यादिना तन्मतेभेदवादिनांमतेशुक्त्याद्यध्यस्तरजतादिवद्देहादे रात्मन्यध्यस्तत्वस्वीकारेतन्मिथ्यात्वापत्तिभीत्याध्यासिकसंबंधास्वीकारात् अन्यसंबंधस्यचनिरूपणासंभवात् कथंचिदपिसेवानहिसंभवेत् ३४३ अणोर्जीवस्यदेहादिसंबंधासंभवोयःप्रतिज्ञातःसएवसमवायादिनिरासेना पाद्यते अणोरिति समवायाभावेहेतुरापाद्यते अकार्य्येति अयमभिप्रायः तंतुकार्य्यस्यपटस्यैवतत्कारणेषुतंतु

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

षुसमवायः संमतोनाकार्य्यस्य घटस्याकारणेषुतंतुषुसमवायस्तथाचाणुजीवदेहयोरुपादानोपादेयभावस्यमि
थोऽसंमत्यानसमवायसंभवः ३४५ संयोगोनिरस्यते तथाणोरिति अणुजीवोनदेहसंयुक्तोनिरंशत्वाद्व्यतिरे-
केपदादिवत् नचपरमाणुद्वयसंयोगेनद्व्यणुकोत्पत्तौआत्ममनःसंयोगेनज्ञानेच्छादिगुणसमवायेचपरमा-
ण्वात्ममनसामसंयुक्तत्वाभावेपिनिरंशत्वसद्भावात्साधारणानैकांतिकतेति वाच्यंपरमाणुतत्संयोगयोरप्रत्य
क्षतयाप्रत्यक्षोपजीव्यानुमानादेरप्रत्यक्षेर्थेप्रवृत्त्यनुपपत्तेः परमाणुतत्संयोगयोरुभयोरप्रामाणिकतया

तथाणोर्हिनिरंशत्वान्नसंयोगोपिसंभवेत् संयोगोऽव्याप्यवृत्तिर्हिनिरंशेसंभवेत्कथं ३४५

तत्रानैकांतिकत्वोक्त्यसंभवात् आत्मनश्चकेवलोनिर्गुणश्चेत्यादिश्रुत्यासंयोगज्ञानेच्छादिगुणासमवायेनतत्राप्य
नैकांतिकत्वानुपपत्तेः मनसस्तुनारायणात्प्राणोजायतेमनइत्यादिश्रुत्याकार्य्यद्रव्यतयासावयवत्वेनसंयोग
संभवेपिनिरंशत्वाभावान्नानैकांतिकताप्रयोगांतरंप्रदर्श्यते संयोगइति संयोगोननिरंशवृत्तिरव्याप्यवृत्ति
त्वाद्विभागवत् नचाकाशगतशब्देव्यभिचारः तस्माद्वाएतस्मादात्मनआकाशःसंभूतइत्यादिश्रुत्याका ५३
र्य्यद्रव्यत्वेननिरंशत्वासंप्रतिपत्तेः प्रदेशभेदव्यवहारेणांशविभागप्रतीतेश्च ३४५ ७

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ननुदेहेऽ णवात्मसंयोगाच्चेष्टादिदर्शनेनागत्यासंयोगेपिव्याप्यवृत्तित्वंकल्पनीयमित्याशंक्योच्यते व्याप्यवृत्ति-र्हीति कल्पनायादृष्टविरुद्धानुत्थानान्मैवमित्यर्थः किंचात्मनोऽणुत्वस्यैवएषमहानजआत्मायोयंविज्ञानमयः प्राणेषुहृद्यंतर्ज्योतिरित्यादिश्रुतिभिरसिद्धेः केवलोनिर्गुणश्चेति असंगोह्ययंपुरुषइत्यादिश्रुत्यात्मनि संयोग गुणस्यचासिद्धेरणवात्मदेहसंयोगस्यचेष्टादौतत्कारणत्वस्यचप्रत्यक्षाभावात्तद्बलेनसंयोगेव्याप्यवृत्तित्वकल्प-नानुत्थानात् नचैषोणुरात्माचेतसावेदितव्यइत्यणुत्वसिद्धिस्तत्रचेतसेतिचेतसौपाधिकाणुत्वनिर्देशात्तद्गु

व्याप्यवृत्तिर्हिसंयोगोनलोकेदृश्यतेक्वचित् कल्पनापिभवेद्दृष्टिमूलानादृष्टमूलिका
३४६परमाण्वादिसंयोगात्सृष्टिर्ह्यातार्किकैर्मता श्रुतियुक्तिविरुद्धत्वात्सात्वप्रामाणि
कीखलु ३४७सर्वेवेदाहियत्पदमामनंतीतिवाक्यतः ब्रह्मातिरिक्तविषयेतात्पर्य्यंहिश्रु
तेर्नहि ३४८

णसारत्वात्तुतद्व्यपदेशइत्यादौभगवत्पूज्यपादेननिर्णीतत्वाच्च ३४६ ननुकथंतर्हितार्कि कैःपरमाणुसंयोगात्सृष्ट्युक्तिरित्याशंक्यतेषांभ्रांतत्वादेवतदुक्तिरितिसमाधीयते परमाण्वादीति तस्माद्वा एतस्मादात्मनआकाशःसंभूतआकाशाद्वायुर्वायोरग्निरग्नेरापोद्भ्यः पृथिवीत्यादिश्रुत्युक्तयुक्तिभ्यांविरु द्धत्वादितिभावः ३४७ अणुसंयोगस्याप्रामाणिकत्वमेवतत्तत्प्रमाणाविषयत्वेनद्रढयतादौश्रुत्यविषयत्व

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मुच्यते सर्वेवेदाइति सर्ववेदानांभगवत्पदैकाम्नानपरत्वात्तदतिरिक्त विषयेश्रुतेः तात्पर्य्यंनह्येव नचपूर्वकांडस्य चोदनालक्षणोह्यर्थोधर्मः आम्नायस्याक्रियार्थत्वादानर्थक्यमतदर्थानांविधिनात्वेकवाक्यत्वात्स्तुत्यर्थेनविधीनांस्युरित्यादिन्यायैर्धर्मपरत्वमेवेतिवाच्यं तस्याप्यंतःकरणशोधनविविदिषाद्वाराब्रह्मण्येवपर्य्यवसानात् ३४८ अध्ययनविध्यन्यथानुपपत्याप्येवमेवेत्युच्यते वेदइति स्वाध्यायोध्येतव्यःफलवदर्थावबोधकोवेद इत्यत्रफलवदर्थावबोधमुद्दिश्य वेदाध्ययनविधानान्निःफलेर्थज्ञानेतस्यतात्पर्य्यासंभवएवेतिभावः ३४९

वेदःफलवदर्थज्ञानहेतुःसर्वसंमतः तात्पर्य्यंनिःफलेर्थज्ञानेतस्यकुत्रचिन्नहि ३४९
यत्परोधीभवेच्छब्दस्तस्यार्थस्तुसएवहि इतिन्यायेनवेदार्थोब्रह्माद्वैतंनचेतरत् ३५०
एतावान्सर्ववेदार्थःशब्दआस्थायमांभिदां मायामात्रमनूद्यांतेप्रतिषिध्यप्रसीदति ३५१

ब्रह्मातिरिक्तस्यतात्पर्य्याविषयत्वेनैववेदार्थत्वाभावउच्यते यत्परइति यःशब्दोयत्परोयस्मिन्नर्थेतात्पर्य्यवान्-सएवतच्छब्दार्थः यथापित्रापुत्रंप्रति विषंभुंक्ष्वेत्युक्तेशब्दशक्तिविषयत्वेपिविषभोजनविधेर्नार्थत्वंतात्पर्य्यागोचरत्वात् किंतुतात्पर्य्यगोचरत्वादक्षरार्थत्वाभावेपिशत्रुगृहभोजननिवृत्तेरेवतदर्थत्वंतथाचैतन्न्यायेनवेदतात्पर्य्य-विषयत्वादद्वैतंब्रह्मैववेदार्थोनेतरद्वस्तुजातं ३५० अद्वितीयब्रह्मणएववेदार्थत्वेश्रीकृष्णवाक्यमानंपठ्यते ए ५४

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तावानिति एतावानेवसर्ववेदस्यार्थइतिप्रतिज्ञायतदेवार्थमाह शब्दोवेदोब्रह्मबोधायैवप्रवृत्तोपिसाक्षान्निःप्रपंचबोधासंभवात् अध्यारोपापवादाभ्यांतद्बोधयितुमध्यारोपंविनापवादानुपपत्तेरादौतस्माद्वाएतस्मादात्मनआकाशःसंभूतइत्यादिना चिज्जडभिदांआकाशाद्वायुरित्यादिनाजडजडभिदांद्वासुपर्णासयुजासखाया इत्यादिनाजीवेशभिदांयथास्वयंज्योतिरात्माविवस्वानपोभिन्नाबहुधैकोनुगच्छन् उपाधिनाक्रियतेभेदरूपोदेवःक्षेत्रेष्वेवमजोयमात्मेत्यादिनाजीवानांस्वप्नप्रतीतजीवानामिवकल्पितौपाधिकांमिथोभिदांनवैसर्वस्यकामायसर्वंप्रियंभवत्यात्मनस्तुकामायसर्वंप्रियंभवतीत्यादिनाभोक्तृभोग्यभावेनजीवजगद्भिदामनूद्यमायांतुप्रकृतिंविद्या-

नापिवेदेऽणुसंयोगःक्वचित्दृष्टोनुवादतः नप्रत्यक्षोणुसंयोगस्ततोऽप्रामाणिकोमतः ३५२

त्जीवेशावाभासेनकरोतिमायाचाविद्याचस्वयमेवभवति उपाधिनाक्रियतेभेदरूपइंद्रोमायाभिःपुरुरूपईयते इत्यादिनातांभिदांमायामात्रमितिकृत्वाऐतदात्म्यमिदंसर्वंनेहनानास्तिकिंचन तत्त्वमस्यहंब्रह्मास्म्ययमात्माब्रह्मनान्योतोस्तिद्रष्टा एकोदेवःसर्वभूतेषुगूढःसर्वव्यापीसर्वभूतांतरात्मेत्यादिनाभिदांप्रतिषिध्य अथनित्योनिष्कलोनिराख्यातोनिर्विकल्पोनिरंजनःशुद्धोऽद्वितीयोनारायणोनद्वितीयोस्तिकश्चिदित्यादिनामामेवाद्वैतंब्रह्मास्थायप्रसीदतीति ३५१ वेदस्यतात्पर्यतोब्रह्मपरत्वमेवेत्युक्त्वातत्राणुसंयोगानुवादोपिनास्तीत्युच्यते नापी

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ति नाणुसंयोगेप्रत्यक्षमपिमानमित्युच्यते नप्रत्यक्षइति ३५२ अनुमानप्रामाण्यंतत्राशंक्याप्रत्यक्षेतदप्र
वृत्तिरुच्यते अप्रत्यक्षइति सदाऽप्रत्यक्षइत्यन्वयः तत्राप्रवृत्तौसाध्याप्रसिद्धिर्हेतुरित्युच्यते अप्रत्यक्षस्येति
३५३ अनुमानादप्रत्यक्षसाध्यप्रसिद्धिमाशंक्योच्यते अनुमानादिति एतदनुमानसाध्यस्यद्वितीयानुमाने
नसिद्धौतत्साध्यप्रसिद्धिः प्रथमेनचेदन्योन्याश्रयस्तृतीयेनचेत्तस्यप्रथमेनचेच्चक्रिकाचतुर्थेनचेदनवस्थासा

अप्रत्यक्षेसदार्थेहिनानुमानंप्रवर्त्तते अप्रत्यक्षस्यसाध्यस्यप्रसिद्धिःसंभवेन्नहि
३५३ अनुमानात्प्रसिद्धौतुह्यनवस्थास्फुटामता साध्याप्रसिद्धौलिंगेनतस्यव्याप्ति
र्नसंभवेत् ३५४ व्याप्त्याश्रयोहिलिंगस्यात्तांविनातन्नसंभवेत् निश्चितंयत्रसा
ध्यंस्यात्दृष्टांतःसोन्वयीभवेत् ३५५ साध्यासिद्धौनदृष्टांतप्रसिद्धिरपिसंभवेत्
साध्याभावेनसंव्याप्तो दृष्टांतोव्यतिरेक्यपि ३५६

ध्याप्रसिद्धौव्याप्तेतद्घटितत्वात्तदसि
द्धिरुच्यते साध्याप्रसिद्धाविति ३५४ साध्यव्याप्तिविनातदाश्रयलिंगासिद्धिरुच्यते व्याप्त्याश्रयइति साध्याप्र
सिद्धौनिश्चितसाध्यवदन्वयदृष्टांतासिद्धिरुच्यते निश्चितमित्यर्द्धाभ्यां ३५५ तस्मादन्वयिदृष्टांतस्यसा- ५५
ध्यनिश्चयाधीनत्वात्तदसिद्धौनदृष्टांतप्रसिद्धिरपिव्यतिरेकिदृष्टांताभावंदर्शयितुंतल्लक्षणस्यापिसाध्यघ

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दितत्वंप्रदर्श्यते साध्याभावेनेति संव्याप्तः संपन्नोनिश्चितसाध्याभाववानित्यर्थः ३५६ साध्यज्ञानंविनातद
नुपपत्तिरुच्यते साध्यज्ञानमिति अभावज्ञानस्यप्रतियोगिज्ञानाधीनतयासाध्यज्ञानंविनातदभावनिश्च
यासंभवात्सव्यतिरेकिदृष्टांतोपिनसंभवेत् परामर्शासंभवोप्युच्यते साध्यव्याप्तस्येत्याद्यर्द्धाभ्यां साध्येन
व्याप्तस्यलिंगस्यहेतोर्यापक्षधर्मतापक्षेवर्तमानत्वं ३५७ तज्ज्ञानमेवपरामर्शस्तथाचसाध्याप्रसिद्धातद

साध्यज्ञानंविनाऽभावानिश्चयाज्ज्ञायतेनसः साध्यव्याप्तस्यलिंगस्यभवेद्यापक्ष
धर्म्मता ३५७ तज्ज्ञानंहिपरामर्शः साध्याव्याप्तोकथंभवेत् नानुमानप्रवृत्तिः-
स्यादप्रत्यक्षेकथंचन ३५८ संयोगाव्याप्यवृत्तित्वान्निरंशेतदसंभवात् अणो
र्देहाद्यसंबंधान्नसेवासंभवेत्किल ३५९ नानकस्यमतेयावद्देहाध्यासमुपाधितः सं
बंधात्संभवेत्सेवाशंकागंधोपितत्रनो ३६०

व्याप्तौलिंगस्यवासिद्धौतस्यपक्षेवर्तमानत्वज्ञानंकथं
भवेन्नकथमपिअप्रत्यक्षेऽनुमानाप्रवृत्त्यापादनमुपसंह्रियते नानुमानेति ३५८ हेतुमापाद्यात्माणुवादिमतेसे
वाद्यभावापादनमुपसंह्रियते संयोगेति तदसंभवात्संयोगासंभवात् अध्यासंविनासमवायसंयोगाचनंतर्भा
व्यसंबंधांतरासंभवात् देहाद्यसंबंधादेवसेवानसंभवेदितिभावः ३५९ नानकमतेतदुपपत्तिरुच्यते नानक

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्येति देहाध्यासपर्य्यंतमुपाधितस्तदध्यासिकतादात्म्यात्सेवासंभवेदेवतत्रनोशंकागंधोपि ३६० ज्ञानिनो
ऽध्यासाभावात्सेवाद्यनुपपत्तिमाशंक्यसमाधीयते बाधितस्येति साधनकालेकृतसेवाद्यनुष्ठानबाधिता
नुवृत्त्यातन्निवर्तकस्यविषयरागाद्यभावात्स्वभावसिद्धतयाबोधेनाध्यासपरिक्षयेपितदध्यासस्यबाधि
तस्यानुवृत्त्याचभोजनादिदैहिकव्यवहारवज्जीवन्मुक्तावपिविष्णुसेवासंभवेदेव ३६१ ज्ञानिनोऽनियोज्य

बाधितस्यानुवृत्त्यातुबोधेध्यासपरिक्षये संभवेद्विष्णुसेवावैजीवन्मुक्तावपिध्रुवम्
३६१ यद्यपिश्रीहरेर्वाक्यात्तस्यकार्य्यंनविद्यते भक्त्यनुवृत्तितोथापिलोकसंग्रहतोभ
वेत् ३६२ लोकसंग्रहमेवापिसंपश्यन्कर्तुमर्हसि इतिस्मृत्यातथाविष्णोर्गुणमाहात्म्य
कर्षणात् ३६३ आत्मारामाश्चमुनयोनिर्ग्रंथाअप्युरुक्रमे कुर्वंत्यहैतुकींभक्तिमित्थंभूत
गुणोहरिः ३६४

त्वेनतदसिद्धिमाशंक्योच्यते यद्यपीति तस्यकार्य्यंनविद्यतेइतिगीतायांश्रीहरेर्वाक्याद्य
द्यपितस्यज्ञानिनःकिंचित्कार्य्यमवश्यकर्तव्यंनास्तितथापिपूर्वसिद्धभक्त्यनुवृत्तेरेवस्वभावतएवसेवादिस्यात् हे
त्वंतरमप्युच्यते ३६२ तत्रगीतावाक्यमेवमानंप्रदर्श्यते लोकेति लोकानांसंग्रहोभक्तिप्रवर्तनेनानुग्रहस्तंसंपश्यन्न
नुसंदधन् हेत्वंतरमप्युच्यते विष्णोरिति कर्षणात् गुणमाहात्म्येनचित्तस्यानुकर्षात् ३६३ भगवद्गुणानामात्मारामम‍ु



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

निमनः कर्षकत्वेमानमुच्यते आत्मारामाश्चेति मुनयः श्रुतार्थमननशीला आत्मारामा आत्मन्येवारमणंयेषांनिरंत रस्वरूपानुसंधानपरानिर्ग्रंथातेनोद्भूतस्वरूपसाक्षात्कारेणचिज्जडाध्यासरूपहृदयग्रंथिशून्या अपिउरुक्रमेस्व रूपानंदपूर्णतयातदितरेषुमिथ्यात्वदृष्ट्यानिःस्पृहत्वेनाहैतुकींप्रयोजनशून्यांभक्तिंकुर्वंति ननुप्रयोजनमनुद्दिश्य मंदोपिनप्रवर्ततेकथंविद्वांसोप्यहैतुकींभक्तिंकुर्वंतितत्राहुः इत्थमिति हरिरेवइत्थंभूतसन्मनः कर्षकगुणःय

विदेहेविष्णवभेदेपिनैवसेवावियुज्यते विष्णोर्धामनिसर्वेषांविष्णुरूपत्वनिर्णयात् ३६५ यथानसच्चिदानंदानांभेदोस्तिमनागपि तथाभगवदंगानांनभेदःस्वगतोमतः ३६६ निर्दोषपूर्णगुणविग्रहआत्मतंत्रोनिश्चेतनात्मकशरीरगुणैश्चहीनः आनंदमात्रकरपादमुखोदरादिःसर्वत्रचस्वगतभेदविवर्जितात्मा ३६७

थाजडत्वेनप्रयोजनशून्योपिलोहःस्वभावत एवचुंबकेनाकृष्यते तद्वत्प्रयोजनंविनापितच्चित्तस्यहरिगुणाकृष्टतयाभक्तिंकुर्वंतीतिभावः ३६४ विदेहेपिगुरुमते सेवाद्यवियोगउच्यते विदेहेइति सर्वेषांसखासखिपार्षददासादीनांविष्णुरूपत्वात्तदभेदेपितत्तद्रूपेणसेवा- संभवात् ३६५ तेषामभेदेदृष्टांतउच्यते यथानेति पारिषदादयोऽभिन्नाःब्रह्मात्मकत्वात्सच्चिदानंदा इवभग वदंगानीवेतिभावः ३६६ भगवदंगानांस्वरूपात्मकत्वेस्वगतभेदाभावेचमानमुच्यते निर्दोषेति निर्दोषोमायि

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कत्वादिदोषशून्यः पूर्णायेगुणाः सौंदर्य्यादयस्तदात्मकविग्रहआत्मतंत्रोऽन्यानधीनः पूर्णगुणोक्त्यामायिकगु
णाशरीराश्रयत्वमाशंक्याह निश्चेतनेति किमात्मकंतर्हितत्राह आनंदमात्रेति परिच्छिन्नत्वंनिरस्यति सर्वत्रेति
मिथोभेदंवारयति स्वगतेति ३६७ मानाभिप्रायोवर्ण्यते इत्यादिभिरिति विष्णुतंत्रेपंचरात्रागमेप्रतिपादनात्
विष्ण्वंगानिस्वगतभेदशून्यानिआनंदैकरूपत्वात् सच्चिदादिवदितियथातथापारिषदादयोपीतिभावः ३६८ मा-

इत्यादिभिर्विष्णुतंत्रेप्रतिपादनतोभिदा नास्त्यानंदैकरूपत्वाद्विष्ण्वंगानांयथातथा
३६८ नयत्रसत्वंनरजस्तमश्चनवैविकारोनमहान्प्रधानं नयत्रमायाकिमुतापरेहरेर
नुव्रतायत्रसुरासुरार्चिताः ३६९ इत्यादिनाहरेर्धाम्निमायायाअप्रवेशतः अमा
यिकंचित्सुखैकरसत्वंतत्रनिश्चितं ३७०

नांतरमुच्यते नयत्रेति नयत्रसत्वंनरजः तमश्चेतिच
कारेणनञोनुकर्षणात्तमोपिन नवैविकारो विशेषाहंकारः नमहानित्यस्मितालक्षणः सूक्ष्माहंकारः नचप्रधीयते
लीयतेकार्य्यजातमस्मिन्नितिसर्वलयस्थानंमायेतिनसांख्यपरिकल्पितप्रकृतेः सशब्दत्वंकिमुतापरेतत्कार्य्याका
शादयःस्वैरिंद्रादिभिरसुरैश्चभगवद्भक्तैर्बलिविभीषणप्रह्लादादिभिरर्चिताध्येयाहरेरनुव्रतास्तत्रमायाद्यप्रवेशा ५७
त्तद्रूपाएवयत्रभवंतीतिभावः ३६९ वाक्यतात्पर्य्यमुच्यते इत्यादिनेति तत्रसर्वेषाममायिकंचित्सुखैकरसत्वमेवेतिनि
श्चितं ३७०

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

उक्तएवार्थोविशदीक्रियते श्रीहरिरित्यादिद्वाभ्यां ३७१ भिन्नेभेदस्थितिरभिन्नेवानांत्योर्व्याघातात् स्वात्यंताभा ववतिभासमानत्वेनमिथ्यात्वापाताच्च नाद्यः स्वेनभिन्नेस्वावस्थितावात्माश्रयात् अन्येनभिन्नेचेत्तस्यापिभेदत्वा द्भिन्नाश्रयत्वेतदाश्रयविशेषणः प्रथमश्चेदन्योन्याश्रयस्तृतीयश्चेत्तदाश्रयविशेषणतया प्रथमस्यस्वीकारेचक्रि- कात्चतुर्थेगींकृतेतत्तदाश्रयस्यान्यस्यान्यस्य संमतावनवस्थापुनरावृत्तावनेकव्यवधानेनात्माश्रयत्वेचक्रिकाएक व्यवधानेपरस्पराश्रयता अन्योन्याभावस्यभेदत्वपक्षेतु भेदसिद्धावन्यत्वसिद्धिरन्यत्वसिद्धावन्योन्याभावत्व

श्रीहरिः पार्षदाःसख्यःसखाःपक्षिमृगादयः मणिकांचनभूम्याद्याःलतापुष्पद्रुमा
दयः ३७१ वापीकूपतडागाद्याःसर्वेयेतत्रसंस्थिताः विष्व्वात्मिकाद्याभिन्नाश्चसच्चिदा
नंदवन्मताः ३७२

सिद्धिरित्यन्योन्याश्रयापत्यातदसिद्धिरेवस्वरूपस्यभेदत्वेभेदस्यविदारणात्मक त्वान्निःस्वरूपत्वापत्तिः भेदस्यस्वरूपात्मकत्वेत्वभेदत्वापत्तिस्तथाप्रतियोग्यादिसापेक्षभेदस्यतन्निरपेक्षस्व रूपात्मकत्वानुपपत्तिश्च एवंसर्वत्रसर्वथाभेदासिद्धिः तथाप्रतियोग्याद्यभानेभेदाभानमेवतद्भानेप्यभिन्नत्वेन धर्मिप्रतियोगिभानेतत्रभेदासिद्धिर्भिन्नत्वेनतद्भानेतद्विशेषणभेदग्रहेपिप्रतियोग्यादिसापेक्षतयात्माश्र यान्योन्याश्रयच(क्रिकानवस्थादिरितिनभेदस्यकथंचित्प्रमाणतोज्ञानं लोकेतु भ्रांतिप्रतिपन्नस्यभेदस्यनेहना

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नास्तिकिंचनेत्यादिश्रुत्यानिषेधः शास्त्रैकगम्येभगवल्लीलाधामादौतुशास्त्रेणस्वरूपात्मकतयाग्रहभेदेनैवावगतो प्रथमतएवभेदाप्रवेशेतन्निषेधापेक्षायाएवाभावात्सच्चिदानंदवदभिन्नाएवतइतिभावः ३७२ फलितमुच्यते तस्मादिति अखंडानंदमयीतत्स्वरूपेत्यर्थः ३७३ श्रीनानकमतसंग्रहोभिधीयते विष्णोरिति विष्णुविग्रहधामादेः सत्यत्वानंदमात्रोक्त्यासर्ववैष्णवाचार्य्यतात्पर्य्यगोचरत्वंतदर्थमेवतेद्वैतसत्यत्वापादनादन्यथानिःफल

तस्माद्विष्णोरभेदेपिसख्यदास्यादिसंभवात् अप्रत्यूहाहरेर्लीलाऽखंडानंदमयीमता
३७३ विष्णोर्विग्रहधामादिसत्यमानंदमात्रकं मायाकार्य्यंजगन्मिथ्यानानकस्यमतंध्रु
वं ३७४ अत्रयुक्तिप्रमाणादियथावद्यत्त्वपेक्षितं ईशावास्यस्यतैत्तर्य्याव्याख्यानेसम्यगी
रितं ३७५ तथाश्रीरामगीतायाव्याख्यानेन्यत्रचित्रधा सम्यगापादितंत्वत्रविस्तरादुपरम्य
ते ३७६

दुःखरूपद्वैतसत्यत्वेफलवदर्थावबोधकवेदानुयायिनांतात्पर्य्यासंभवात् जगन्मिथ्यात्वोक्त्याश्रीशंकराचार्य्यतात्पर्य्याविरुद्धत्वमितिसर्वाचार्य्याविरुद्धंनानकस्यमतंध्रुवंचालयितुमशक्यमितिभावः ३७४ अत्रापेक्षितयुक्तिप्रमाणादिकंत्वन्यत्रास्माभिर्लिखितमित्यत्रविस्तरादुपरम्यतेइत्युच्यते अत्रेत्यादिद्वाभ्यां ईशावास्योपनिषद्व्याख्यानेतैत्तिर्य्युपनिषद्व्याख्यानेच ३७५ अन्यत्रव्याससूत्राणांश्रीगुरुसंमतसूत्रवृत्त्यादौ ३७६

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

श्रीगुरोस्तथासंमतत्वेतद्वाक्यमेवमानमित्युच्यते स्वीयजप्येइति ३७७ तद्वाक्यमेवार्थतःसंगृह्यते सत्यखंडइ
ति सत्यखंडेनित्यपरमार्थसद्रूपेधाम्निनिराकारोहरिर्वसतितत्रनिराकारोक्त्यामायिकाकारशून्यत्वंसत्यखंडोक्त्याधा
म्नः सत्यतासर्वथाकारशून्यत्वेधामवासाद्युक्त्यनुपपत्तिरितिभावः ३७८ सर्वस्यविष्णवात्मकत्वेशंकांतरमुद्भाव्यते
अभेदेइति भेदाभावेधामधामित्वात्प्रतीतायाआधाराधेयतासानोचितासमाधीयते नैवमिति सभूमाकप्रति

स्वीयजप्येह्युपांतेतुनानकेनसमीरितं साक्षाद्विष्णुस्वरूपेणगुरुणास्वमुखांबुजात् ३७७
सत्यखंडेवसत्याद्योनिराकारोहरिःस्वयं मायिकाकारशून्यत्वंहरेर्धाम्नश्चसत्यता ३७८
अभेदेधामधामित्वान्नाधाराधेयतोचिता नैवंशंक्यंस्वेमहिम्निप्रतिष्ठायाःश्रुतीरणात् ३७९
तद्धाम्नःसत्यतोक्त्यातुप्रपंचस्यमृषात्मता स्पष्टंसंसूचितान्यत्रतद्वाण्यांबहुधेरिता ३८० एत
द्धामादिसत्यत्वंमिथ्यात्वंजगतस्तथा सर्वाचार्य्यविरुद्धंहिनानकस्यमतंभवेत् ३८१

ष्ठितःस्वेमहि
म्नीति श्रुत्यैवतदीरणान्नैवंशंक्यमित्यन्वयः ३७९ जगन्मिथ्यात्वेगुरुसंमतिर्मूलेप्युच्यते तद्धाम्नइति व्यावर्तकंहिविशेषण
मितिस्थितेः सत्यखंडइत्यत्रसत्यत्वविशेषणं मिथ्याप्रपंचव्यावृत्तिर्विनासामंजस्यंनप्राप्नुवन् जगन्मिथ्यात्वंसूचयत्येवअ
न्यत्रतुतद्वाण्यांबहुधास्पष्टमेवतन्मृषात्मताईरिता ३८० श्रीगुरुमतेसर्वाचार्य्यमतविरोधशंकानिराकर्तुमुद्भाव्यते

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एतदित्यादिचतुर्भिः तत्राद्यपद्यपूर्वार्द्धे गुरुमतानुवादउत्तरार्द्धेविरोधशंकेतिविभागः ३८१ सर्वाचार्य्यविरुद्धत्वंप्रति ज्ञायतत्रसर्ववैष्णवाचार्य्यविरोधंस्पष्टयति सर्वैरिति ३८२ शंकराचार्य्यमतविरोधंदर्शयति अद्वितीयादिद्वाभ्यां तत्राद्यपद्यपूर्वार्द्धे शंकराचार्य्यमतानुवादउत्तरार्द्धेतद्विरोधदर्शनं ३८३ तदेवस्पष्टयति हरिविग्रहेति हरिविग्रहधा

सर्वैस्तुवैष्णवाचार्य्यैर्जगत्सत्यत्वमीर्यते जगन्मिथ्यात्ववादेनतद्विरोधःस्फुटोमतः
३८२ अद्वितीयब्रह्मतत्वादन्यद्दृश्यंमृषाखिलं इतिशंकरनिर्णीतंतद्विरुद्धंचतद्भवे-
त् ३८३ हरिविग्रहधामादिदासीदासादिसत्यता अद्वितीयमतेनैषाविरुद्धाशं
करस्यहि ३८४ इत्येवंशंकतेकश्चित्तद्विचारंविनाभवेत् यतोवेदस्यतात्पर्य्यं
सफलार्थेभवेत्किल ३८५ सफलार्थस्फबोधार्थंवेदाध्यायोविधीयते वेदा
ध्ययनविधिनाऽतोवेदःसफलार्थकः ३८६

मादीनांदासीदासादीनांचसत्यतायाएवशंक रस्याद्वितीयमतेनविरुद्धा ३८४ शंकामनूद्यसमाधीयते इत्येवमिति शंकितुर्विचाराभावंप्रतिज्ञायतदेवदर्शयितुंभूमि कोच्यते यतइति सफलार्थेसफलार्थावबोधेइत्यर्थः ३८५ तत्रमानमुच्यते सफलार्थसुबोधार्थमिति सफलोयोर्थस्यसुबो धस्तदर्थंस्वाध्यायोऽध्येतव्यःफलवदर्थावबोधकोवेदइतिवेदाध्ययनविधिनाविधीयतेऽतोवेदःसफलार्थकएव ३८६ 

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तथाचैवंवेदस्यसफलार्थकत्वेवेदव्याख्यातॄणामाचार्य्याणामपिनविफलार्थतात्पर्य्यवत्वमित्युच्यते वेदव्याख्यान कर्तॄणामिति विफलेऽर्थे कथंतात्पर्य्यंभवेन्नकथंचिदपीतिसम्यग्विचार्य्यतांसम्यग्विचारंविनातात्पर्य्यमविदित्वामिथोविरोधस्फुर्त्यैववृथाविवादापत्तेः ३८७ सम्यग्विचारएवप्रदर्श्यते श्रुतीत्यादिद्वाभ्यां द्वितीयाद्वैभयंभवतिउदरमंतरंकुरुतेऽथतस्यभयंभवतिमृत्योःसमृत्युमाप्नोति यइहनानेवपश्यतीत्यादिश्रुतिः भयंद्वितीयाभिनिवेशितः

वेदव्याख्यानकर्तॄणामाचार्य्याणांकथंभवेत् तात्पर्य्यंविफलेह्यर्थेइतिसम्यग्विचार्य्यतां ३८७ श्रुतिस्मृत्योर्द्वितीयाद्वैभयंभवतिकीर्तनात् सर्वदुःखभयादीनां भेदहेतुत्वदर्शनात् ३८८ कथंद्वैतस्यसत्यत्वंविफलंदुःखहेतुकं संभवेद्वेदविद्विज्ञवैष्णवाचार्य्यसंमतम् ३८९

स्यात् यावत्स्याद्गुणवैषम्यंतावन्नानात्वमात्मनः नानात्वमात्मनोयावदस्वातंत्र्यंतदैवहि यावदस्यास्वतंत्रत्वंतावदीश्वरतोभयं यएतत्समुपासीरंस्तेमुह्यंतिशुचार्पिता इत्यादिस्मृतिस्तयोःकीर्तनात्जाग्रत्स्वप्नयोर्भेदसत्वेदुःखभयसत्वंसुषुप्तौभेदासत्वेदुःखाद्यसत्वमितिप्रत्यक्षतोदर्शनाच्चभेददुःखयोर्हेतुहेतुमद्भावाध्यवसायात् ३८८ विफलंदुःखहेतुभूतंद्वैतसत्यत्वंकथंवेदविदांविशेषज्ञानामाचार्य्याणांसंमतंभवेदितिभावः ३८९ ७ ७

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ननुविषयरागात्संमतंस्यात्तत्रोच्यते सर्वेहीति विरागद्योतकउच्यते न्यासिनामिति ३९० कथंतर्हितैस्तथोच्यते तत्राभिधीयते विष्णुविग्रहेतिद्वाभ्यां विष्णुविग्रहधामादौप्रमाणजज्ञानेनाज्ञाननिवृत्तिफलभाक्त्वेसति स्वप्रभत्वेनभानमेवदृश्यत्वंमायिकप्रपंचदृश्यत्वंचिद्भास्यत्वमितिविभागेपिमौढ्यात् तद्विभागाज्ञानात्तुल्यदृश्यत्वसंभ्रमात्कस्यचिद्विष्णुविग्रहादौमिथ्यात्वशंकामाभूदित्यभिप्रेत्य व्यावहारिकपारमार्थिकविभागमनुद्भाव्य द्वैतसत्य

सर्वेहिवैष्णवाचार्य्याविरक्ताविष्णुतत्पराः द्वैतसत्यत्वरागोहिनतेषांन्यासिनांक्वचित् ३९० विष्णुविग्रहधामादौमौढ्यात्दृश्यत्वसंभ्रमात् माभूत्मिथ्यात्वशंकाऽतोद्वैतसत्यत्वमीर्य्यते ३९१ विष्णुधामादिसत्त्वायवर्ण्यतेद्वैतसत्यता स्वप्नादिसत्यताचापिनतेषांतत्रसंमतिः ३९२ विष्णुधामादिसत्यत्वेतेषांतात्पर्य्यमिष्यते तत्स्वीकृतंहिगुरुणातद्विरोधोभवेत्कथं ३९३

त्वमीर्य्यतेइतिभावः ३९१ तस्माद्विष्णुधामादिसत्त्वायैववर्ण्यते द्वैतसत्यतासर्वलोकविरुद्धस्वप्नादिसत्यताचापिवर्ण्यतेवस्तुतस्तुतेषांतत्रसंमतिर्नैव ३९२ यत्रभगवद्विग्रहधामादिसत्यत्वेतेषांतात्पर्य्यंतत्सत्यत्वस्वीकारात्तैरविरोधइत्युच्यते विष्णुधामादीति तद्धामादिसत्यत्वंगुरुणास्वीकृतमितितद्विरोधः कथंभवेन्नकथमपीतिभावः ३९३ श्रीरामचंद्रायनमः ६७



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रपंचविषयेपितदविरोधः प्रदर्श्यते वैफल्यादिति द्वैतसत्यत्वेफलाभावादेवयतोनतत्तात्पर्य्यसंभवोतस्तात्प
र्य्यविषयस्यैवशब्दार्थत्वात् द्वैतसत्यत्वंतद्वाक्यार्थोनहितस्मात् खलुनिश्चयेनजगन्मिथ्यैव ३९४ जगन्मि
थ्यात्वेस्पष्टाश्रीवल्लभाचार्य्यसंमतिः प्रदर्श्यते तदुक्तमिति सुबोधिन्यांश्रीभागवतटीकायांदशमस्कंधेवेद
स्तुतेर्व्याख्यानेसत इदमुत्थितमित्यत्रतज्जगन्मिथ्यात्वमुक्तं अत्रास्मिन्ग्रंथेतात्पर्य्यार्थंतात्पर्य्यंविशदीकर्त्तुंलिख्य

वैफल्यात् द्वैतसत्यत्वेनतत्तात्पर्य्यसंभवः तद्वाक्यार्थोनसत्यत्वंतस्मान्मिथ्याजगत्ख
लु ३९४ तदुक्तंवल्लभाचार्य्यैःसुबोधिन्यांश्रुतिस्तुतेः व्याख्यानेचात्रतद्वाक्यंतात्पर्य्या
र्थंविलिख्यते ३९५ सद्बुद्ध्यासर्वदासद्भिर्नसेव्यमखिलंजगत् भ्रांत्यासद्बुद्धिरत्रेतिसंतं
कृष्णंभजेद्बुधः ३९६ खपुष्पादिसमत्वाद्धिमिथ्याभूतंजगद्यतः अधिष्ठानात्तुसद्बुद्धिस्तं
कृष्णंसततंभजेत् ३९७

ते ३९५ तदीयपद्यद्वयमत्रपठ्यते सद्बुद्ध्येति सद्भिरित्युक्त्यायेतुसद्बुद्ध्याजग
त्सेवंतेतेषामसत्पुरुषत्वंद्योतितंतदेवस्पष्टयति भ्रांत्येति जगतियासद्बुद्धिःसाभ्रांत्यैवकस्तर्हिसद्बुद्ध्याभज
नीयस्तत्राह॥ संतमिति सच्चिदानंदविग्रहंकृष्णमेवयोबुधःसभजेत् योभजेत्सबुधः ३९६ यतःखपुष्पादिसमत्वा
त् तद्वद्वस्तुतस्तुच्छत्वान्मिथ्याभूतंअतस्तुच्छेसत्वेनप्रत्यक्षत्वासंभवाद्यतोऽधिष्ठानात्तत्सत्तयाजगतिसद्बुद्धि

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्तंकृष्णमेवसततंभजेत् उक्तंचश्रीमद्भागवतेमूलेपि तस्मादिदंजगदशेषमसत्स्वरूपंस्वप्नाभमस्तधिषणंपुरु- 
दुःखदुःखं त्वय्येवनित्यसुखबोधतनावनंते मायालउद्यदपियत्सदिवावभातीति ३९७ श्रीशंकराचार्य्यसंम-
तिःप्रदर्श्यते भगवदिति सार्द्धत्रिभिः जनानांशंसुखंकुर्वंतीतितथा अधिष्ठानंविष्णुसत्यं विश्वंचप्रकल्पितमा
हुः ३९८ तद्वाक्यमेवलिख्यते सच्चिदात्मनीति सच्चिदेवात्माविग्रहोयोनित्योविष्णुस्तस्मिन्नधिष्ठानेविष्णौ

भगवत्पूज्यपादायेशंकराजनशंकराः प्राहुर्विष्णुमधिष्ठानंसत्यंविश्वंप्रकल्पितं ३९८ स
च्चिदात्मन्यनुस्यूते नित्येविष्णौप्रकल्पिताः व्यक्तयोविविधाःसर्वाहाटकेकटकादिवत्
३९९ इत्थंसाक्षात्स्वप्रभुखतःप्रक्रियाग्रंथईरितं स्तोत्रादिषुतुशतशोविष्णोःसच्चित्सुखा
त्मता ४०० निरूपितापूज्यपादैर्नकुत्रापिमृषात्मता ब्रूयुर्द्वेषाद्भ्रमाद्दुष्टास्तन्मतेविष्णु
निंदनं ४०१

विविधाःसर्वाव्यक्तयोहाटकेकटकादिवत्प्रकल्पिताः ३९९ इत्थमनेनप्रकारेणप्रक्रियाग्रंथ-
आत्मबोधाख्यप्रकरणेतथापरोक्षानुभूतौ श्रीहरिंपरमानंदमुपदेष्टारमीश्वरं व्यापकंसर्वलोकानांकारणंतंन
मास्यहं इतिईरितंस्तोत्रादिषुतुशतशोऽसंख्यस्थलेविष्णोः सच्चिदानंदविग्रहता सत्यंज्ञानमनंतं नित्यमनाकाश ६१
मित्यादिना निरूपितेत्युत्तरेणान्वयः ४०० कुत्रचिन्मृषात्मतातुनोक्ताकथंतर्हिजनास्तन्मतेमिथ्यात्वंवदंतितत्रो

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

च्यते ब्रूयुरिति केचिद्दुष्टाद्द्वेषात्केचिद्भ्रमा द्ब्रूयुः ४०१ कथंतर्हिं द्वेषादपि निर्मूलावादिनांतथोक्तिरित्यपेक्षायांतद्ब्र मबीजमुच्यते विराडिति मायाकार्य्यभौतिकसृष्टिसमष्टिविराडादिमृषात्वमुक्तं तत्रभगवद्विग्रहत्वदृश्यत्वादिसा म्यकल्पनयाभ्रमात्तथावदंतीतिभावः ४०२ ननुविमतविग्रहोमिथ्यादृश्यत्वाद्रज्जुसर्प्पादिवदित्यनुमानसिद्धे र्थेकथंभ्रमत्वंतत्रोच्यते नदृश्यत्वादिनेति अत्रदृश्यत्वंहेतुस्तत्किंवृत्तिप्रयुक्तावरणनिवृत्त्युपलक्षितस्फुरणात्मत्वंवा

विराड्हिरण्यगर्भादेर्मृषात्वंभौतिकत्वतः प्रोक्तंनसच्चिदानंदवपुषः कुत्रचिद्धरेः ४०२ नदृश्यत्वादिनाकृष्णेतत्साम्येनमृषात्मता दृश्यतेत्वग्र्ययाबुद्ध्यासूक्ष्मयासूक्ष्मदर्शिभिः ४०३ इत्यादिश्रुतिभिर्य्यादृग्दृश्यत्वंब्रह्मणीरितं वृत्त्यात्वावरणेनष्टेचित्स्फूर्त्तिः स्वप्र भत्वतः ४०४ तादृग्भानंहरेरिष्टंनचिद्भास्यत्वमन्यवत् येनमिथ्यात्मताशंकाप्राप्नुया न्मूढचेतसां ४०५

चिद्भास्यत्वंवाआद्येइष्टापत्तिरित्युच्यते दृश्यतेत्वित्यादिपादोनद्वाभ्यां अग्र्यया एकाग्रयाइत्यनेनविक्षेपाभावोक्त्यारजःशून्यत्वंसूक्ष्मयेतिस्थौल्याभावेनतमोराहित्यंसूचितंतथाचशुद्धसत्वा त्मिकया ४०३ यादृगित्युक्तमेवविशदीक्रियते वृत्त्यात्विति ४०४ तादृग्भानरूपंदृश्यत्वंतुहरेरपिनोइष्टंत स्यतुरज्जुसर्प्पादिदृष्टांतेऽन्यत्रचमिथ्यात्वेनाभिमतेजडवर्गेऽज्ञानकृत्यासंभवात्स्फूर्त्त्यात्मत्वाभावाच्चन

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

संभवतीति दृष्टांते साधनवैकल्येनव्याप्यसिद्धाहेतोस्तदाश्रयत्वलक्षणव्याप्यत्वासिद्धिः द्वितीयेस्वरूपासिद्धि रित्युच्यते नचिद्भास्यत्वमिति अन्यवन्मिथ्यावस्तुजातमिवचिद्भास्यत्वलक्षणदृश्यत्वंनपक्षेस्वरूपासिद्धमिति भावः ४०५ शंकरानुयायिनांमहतासंमतिःप्रदर्श्यते तत्संप्रदायेति तद्वाक्यमेवपठ्यते सतोपीति सतोपिना मरूपेद्वेचेत्कल्पितेवदसिचेदितिवादिमतमनूद्यसमाधत्ते तदावदेति ४०६ वक्तव्यमेवाह कुत्रेति यतोनिरधि

तत्संप्रदायविद्वद्भिर्विद्यारण्यैरपीरितं सतोपिनामरूपेद्वेकल्पितेचेत्तदावद ४०६ कुत्रे तिनिरधिष्ठानोनभ्रमःक्वचिदीक्ष्यते नारोपःसंभवेच्छुक्तौशुक्तिकानामरूपयोः ४०७ तद्वत्सतोनामरूपेनकल्प्येतेसतिक्वचित् नाधिष्ठानत्वमसतःकुत्रस्यात्तत्प्रकल्पनं ४०८ तन्नामोपकरणादितत्स्वरूपात्मकंश्रुतं तत्रमायाप्रवेशश्चवर्जितःस्मृतिभिः किल ४०९

ष्ठानोभ्रमःक्वचिन्नेक्षतेऽतःकुत्रकल्पितेइतिवदतदधिष्ठानासंभवान्नकल्पितत्वमितिभावः तदेवाधिष्ठानासंभवंयदस्माभिःपंचदशीटीकायांव्याख्याततदत्राप्युच्यतेसंदृष्टांतं नारोपइत्यादिसार्द्धेन स्वस्मिन् स्वकल्पनानुपपत्तिरितिभावः ४०७ दार्ष्टांतिकेयोज्यते तद्वदिति असतोधिष्ठानत्वमाशंक्योच्यते नाधिष्ठानत्वमि- ति तथात्वेआरोपस्यासत्वेनैवप्रतीत्यापत्तेः ४०८ मानांतरंचोच्यते तन्नामादीति श्रुतंसत्यात्मप्राणारामममितितै-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्तिरीयश्रुतेः स्मृतिभिरिति नतत्रमायाकिमुतापरे हरे रनुवृतायत्रसुरासुरार्चिता इत्यादिभिः ४०९ शांकराणांतन्मि थ्यात्वेतात्पर्य्याभावादपिनतत्रतत्संमतिरित्युच्यते वैदिकानामित्यादिद्वाभ्यां किंफलंभवेन्नकिंचिदितिभावः४१० विद्वेषमाशंक्योच्यते शांकराणामिति आत्मनस्तदात्मतांमायासाक्षीकृष्णएवाहमस्मीत्यादिनाभावयंतस्तन्मृ षात्वंकथंब्रूयुरित्यन्वयः असद्ब्रह्मेतिचेद्वेद स्वयमेवभवेदसत् अस्तिब्रह्मेतिचेद्वेद संतमेनंततोविदुरितिश्रुतेः ४११

वैदिकानांनिःफलेऽर्थेनाभिप्रायःक्वचिन्मतः हरिधामादिमिथ्यात्वेकिंफलंवदतांभवे तु ४१० शांकराणांनविद्वेषोहरौसंस्तुवतांस्तवैः कथंब्रूयुस्तन्मृषात्वंभावयंतस्तदात्म तां ४११ दुःखरूपप्रपंचस्यदृश्यतासाम्यशंकया मांभूत्सत्यत्वमित्यर्थंकैश्चित्कैश्चिद्य दीरितं ४१२ निःफलत्वाद्यतस्तेषांतात्पर्य्यंनैवविद्यते तात्पर्य्याभावतस्तद्वाक्यार्थोनैव कथंचन ४१३

कथंतर्हिकेचित्क्वचिदाहुस्तत्रोच्यते दुःखरूपेतिद्वाभ्यां जगत्सत्यंदृश्यत्वाविशे- षाद्ब्रगवद्विग्रहादिवदित्येवंदुःखरूपप्रपंचस्यसत्यत्वंमाभूदित्यर्थंक्वचित्कैश्चिद्यदीरितंतत्रपूर्वंदृश्यत्वविभा गानिर्द्धारणेनदृश्यत्वाविशेषहेतोःस्वरूपासिद्धेरज्जुसर्पादावनैकांत्याच्चसद्धेतुत्वाभावेन दृश्यतासाम्यशंकयेत्यु क्तं ४१२ तत्तुनिःफलत्वात्तेषांतत्रतात्पर्य्याभावान्नैवकथंचनतद्वाक्यार्थः ४१३ ५ ५

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कः पुनस्तत्संमतोर्थस्तत्रोच्यते जगन्मृषात्वेति यतोजगन्मिथ्यात्वबोधायतैस्तथोक्तं ततोहेतोस्तेषांतत्रैवजगन्मिथ्यात्वेएवतात्पर्य्यंतदेवत्तुतन्मतं ४१४ फलितमुच्यते विष्ण्विति आदिपदेनलीलोपकरणसखिपार्षदपक्षिमृगद्रुमलतादिज्ञेयंध्रुवमविरुद्धत्वादेवाचार्य्यं ४१५ तस्माद्धरिरेवस्वात्मतयापरमार्थत्वादनुसंधेयइत्यवधार्य्यते

जगन्मृषात्वबोधायतैस्तथोक्तंयतस्ततः तेषांतत्रैवतात्पर्य्यंतन्मिथ्यात्वंतुतन्मतं ४१४
विष्णुतद्धामलीलादिसत्यंमिथ्याजगत्खलु सर्वाचार्य्याविरुद्धंतन्नानकस्यमतंध्रुवम्
४१५ स्वात्माऽभिन्नोहरिर्जप्योमनोवाक्कर्मभिःसदा तदन्यत्तुमृषासर्वमितिनानकनिर्णयः ४१६ नारायणोपदेशेनजपन्जप्यंविनिर्गतः नद्यास्तदादिपद्यस्यतात्पर्य्यार्थोविलिख्यते ४१७ सत्यंज्ञानमनंतंयद्ब्रह्मतैत्तिरीवर्णितं सदेवासीदिदंह्यग्रेसौम्यच्छांदोग्यरूपितं ४१८

स्वात्माभिन्नइति जप्यइत्युपलक्षणंध्यानाराधनयोरपिवाचामनःकर्मणोरपिपरिग्रहात् अन्यन्मायिकंमिथ्यानिर्णयःसिद्धांतः ४१६ कथमयमेवगुरुसिद्धांतइतिजिज्ञासायांतदीयजप्यादिपद्यतात्पर्य्यार्थंतद्विशदीकरणायविलिख्यते नारायणोपदेशेनेति यज्जप्यंजपन्नद्याविनिर्गतस्तदादिपद्यस्यइत्यन्वयः ४१७ तत्पद्यार्थश्रौतत्वायश्रुतयउदाह्रियंते सत्यमित्यादित्रिभिः सदेवसौम्येदमग्रआसीदिति छांदोग्यश्रुतिपाठः ४१८ ६३

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तापिन्यामिति गोपालतापिन्यांतत्सृष्ट्वातदेवानुप्राविशदितिश्रुतिपाठः ४१९ अनेनजीवेनात्मनाऽनुप्रविश्यनाम रूपेव्याकरवाणीतिश्रुतिपाठः ससत्यस्वरूपोविष्णुरेवंसुसंकल्प्यजीवरूपःसन्प्रविवेश ४२० उदाहृतश्रुत्यभिप्राय मनूद्यगुरूक्तपद्यभागेप्रयोज्यते इत्यादीति यदेवसत्यंब्रह्मतदेवस्वमाययासृष्ट्वाजीवरूपेणतदनुप्रविष्टोनाम-

सत्पुंडरीकनयनंतापिन्यांस्पष्टमीरितं तत्सत्यंब्रह्मसृष्ट्वेदंतदेवानुप्रविष्टवान् ४१९ अनेनजीवेनात्मनाप्राविश्यव्याकरोम्यहं नामरूपेस्कसंकल्प्यजीवःसन्प्र विवेशसः ४२० इत्यादिश्रुतिभिःसत्यंब्रह्मयद्धितदेवतु नामकृत्ताऽभवत्सत्य नामकर्त्तेतिवर्णितं ४२१ ननूक्ताव्याकृतिर्जीवरूपेणनामरूपयोः रूपंहित्वा कथंसत्यनामकर्त्तेतिवर्णितं ४२२ शृणुवाचारंभणंवैविकारोनामध्येयकं रूप स्यनाममात्रत्वान्नामकर्त्तेतितद्वचः ४२३

रूपकर्त्ताऽभवदितिश्रुत्यर्थमभिप्रेत्यसत्यनाम कर्त्ताइतिश्रीगुरुणावर्णितं ४२१ शंकते नन्विति अनेनजीवेनात्मनानुप्रविश्येत्यत्रनामरूपयोर्व्याकृतिरुक्ता तत्ररूपंहित्वाकथंसत्यनामकर्तेत्युक्तं ४२२ समाधीयते शृण्विति वाचारंभणंविकारोनामधेयमितिश्रुतौ विकाररूपस्यनाममात्रत्वनिर्देशान्नामानतिरेकमभिप्रेत्यनामकर्त्तेत्येवतस्यश्रीगुरोर्वचोभवति ४२३

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सत्यनामकर्त्तेत्यस्यश्रौतत्वंनिर्द्धार्य्यपुरुषशब्दप्रयोगस्याभिप्रायउच्यते सृष्ट्वेति स्वमायययाभूतानिभूतेभ्यश्च पुरःशरीराणिसृष्ट्वातेषुजीवतदंतर्य्यामिरूपाभ्यामावसन् सहरिःसत्यनामकर्तापुरुषःकथ्यते ४२४ ननुब्रह्मणो जीवरूपेणपुरुषत्वेजन्मसंसारापत्तिस्तत्रोच्यते यतइति यतोऽसौजीवउपाध्यध्यासेनसंसारीवभासमानोपि वस्तुतोब्रह्मैवातोजन्मसंसारवर्जितएववस्तुतस्तदभेदाज्जीवस्यापिभवशब्दार्थजन्मसंसाराभावेतदभावा-

सृष्ट्वाभूतानिभूतेभ्यःपुरःसृष्ट्वातदावसन् कथ्यतेसहरिःसत्यनामकर्तासुपूरुषः
४२४ यतोब्रह्मैवजीवोऽसौजन्मसंसारवर्जितः भवोजन्माथसंसारस्तदभावात्सनि
र्भवः ४२५ नान्योतोऽस्तियतोद्रष्टाश्रोतासर्वात्मकोहरिः अन्यत्वेसंभवेद्वैरंनिर्वैरोथ
मतोहरिः ४२६ यस्यमूर्त्तेर्नकालोस्तिकालावच्छेदवर्जिता मूर्त्तिर्यस्यह्यकारोयोहरिः
कालात्ममूर्त्तिमान् ४२७

सहरिर्निर्भवइतिकैमुत्यसिद्धं ४२५ निर्वैरशब्दाभिप्रायउच्यते नान्योतइति यतोनान्योतोऽस्तिद्रष्टानान्योतोऽस्तिश्रोताइतिश्रुत्याहरिःसर्वात्मकः वैरस्तुअन्यत्वेएवसंभवेन्नत्वेकत्वेतथा चतदसंभवात्हरिर्निर्वैरएवमतः ४२६ अकालमूर्त्तिशब्दार्थउच्यते यस्येति यस्यमूर्त्तेर्विग्रहस्यकालोनास्ति ६४
सोकालमूर्त्तिस्तद्भावार्थएवविशदीक्रियतेनित्यत्वात्कालानवच्छिन्नायस्यमूर्त्तिरितिभावः अर्थांतरमुच्यते यइ

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ति योहरिः अकारोवासुदेवःस्यादितिकोशोक्तेरक्षराणामकारोऽस्मीतिभगवदुक्तेश्चाकारश्चासावेव कालमू-
र्तिश्चसतथेत्यर्थः ४२७ कालमूर्तित्वेमानमुच्यते कालोस्मीति उपसंह्रियते अकालेति गुरुपद्यस्यपदांतरं
निवेश्यते अयोनीति ४२८ अयोनिपदस्यार्थउच्यते नयोनिरिति अनादित्वाद्यस्यनयोनिर्नामकारणंसतुअ
योनिरितिभावः अर्थांतरमुच्यते नयोनिरिति यस्तुविष्णुर्योनिः कारणंनेत्यर्थस्तत्रहेतुरुच्यते हेतुत्ववर्ज्जनादि

कालोस्मिलोकक्षयकृत् प्रवृत्तइतिसुस्मृतः अकालमूर्तिर्भगवानयोनिसंभवोहरिः
४२८ नयोनिःकारणंयस्यानादित्वात्सत्वयोनिकः नयोनिःकारणंवास्याद्विष्णुर्हेतु
त्ववर्ज्जनात् ४२९ ब्रह्मापूर्वमनपरमनंतरमवाह्यकं नतस्यकार्य्यंकरणंविद्यतेचश्रु
तीरणात् ४३० इत्थंभावेनकथितोभगवान्भगवत्तमः नेत्थंभावेनहिपरंज्ञातुमर्ह
तिसूरयः ४३१

ति ४२९ हेतुत्वाभावेश्रुतिद्वयमानमुच्यते ब्रह्मापूर्वमिति नपूर्वंकारणंविद्यतेयस्यतद
पूर्वंनअपरंकार्य्यंयस्येत्यपरंनांतरंबाह्यंचयस्येत्यनंतरमवाह्यंकरणमित्युपलक्षणंकारणमात्रस्यतथाचतस्य-
कार्य्यंकारणंचनविद्यतेइत्यर्थः ४३० स्मृतिश्लोकद्वयमपिपठ्यते इत्थमिति भगवान्भगवत्तमइत्थंभावेनजग
त्कारणत्वेनश्रुत्यादौयद्यपिकथितस्तथापीत्थंभावेनकारणत्वेनपरंपरमात्मानंसूरयोविद्वांसोनज्ञातुमर्हंति४३१

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कुतोयथाश्रुतंनज्ञातुमर्हतीतितत्राह नास्येति अस्यप्रपंचस्यजन्मादौकर्म्मणिपरस्य इत्थंभावः कारणत्वंनास्तिकथंतर्ह्युच्यतेतत्राहानुविधीयते यन्माययाऽऽरोपितंकर्तृत्वंतत् अनुवादतयोच्यते अनुवादप्रयोजनमाह कर्तृत्वप्रतिषेधार्थमिति अनुवादविनातदपवादासंभवादितिभावः ४३२ स्मृत्यभिप्रायःपद्यपदार्थैर्योज्यते इतिस्मृत्येति सविष्णुरयोनिकोनकारणमित्यर्थः शंकोद्भाव्यनिरस्यते हेतुत्वमिति विष्णोःसर्वजगद्धेतुत्वंसत्यनामकर्त्तृ

नास्यकर्मणिजन्मादौपरस्यानुविधीयते कर्तृत्वप्रतिषेधार्थंमाययारोपितंहि
तत् ४३२ इतिस्मृत्याचहेतुत्वान्निषेधात्सत्वयोनिकः हेतुत्वंतन्निषेधश्चकथंमा
शंक्यतांक्वचित् ४३३ त्वत्तोऽस्यजन्मस्थितिसंयमान्विभोवदंत्यनीहादगुणादवि
क्रियात् त्वयीश्वरेब्रह्मणिनोविरुध्यतेतदाश्रयत्वादुपचर्य्यतेगुणैः ४३४

त्यत्रतन्निषेधश्चायोनिरित्यत्रकथमितिक्वचिदपिमैवाशंक्यतां ४३३ शंकाप्रतिषेधेप्रमाणदर्शनेनैवहेतुरुच्यते त्वत्तोस्येत्यादिसार्द्धेन जन्मादिहेतुत्वेविरोधायविशेषणान्यनीहादित्यादीनिविरोधपरिहारमाह त्वयीति ईश्वरत्वात्कारणत्वंब्रह्मत्वादकारणतयाऽनीहत्वादितत्रोपपत्तिमाह तदाश्रयत्वादिति गुणैःकृतंजगज्जन्मादिगुणाश्रयत्वात्त्वय्युपचर्य्यतेइतिभावः ४३४ ७ ७ ७



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रमाणेनाविरोधमापाद्ययुक्तितोप्यविरोधउच्यते कार्य्यस्येति अस्योपलभ्यमानस्यकार्य्यस्यप्रपंचरूपस्य-मिथ्यात्वात्स्वरूपेणनदसत्वेकस्यकारणतास्यादितिसत्यपिप्रतीत्याकारणत्वेशुक्तेरूप्यंप्रत्येववस्तुतोऽकारणत्वमेवे त्यविरोधइतिभावः ४३५ उक्तदृष्टांतमेवविस्पष्टीक्रियते शुक्त्यज्ञानादिति रजतस्यप्रतीतिमात्रतयाशुक्त्यज्ञाना दुत्पत्तिः वस्तुतस्तुतस्यरजतस्याभावेननतदुत्पत्तिर्विनाशोवाइतियथातथेत्यर्थः ४३६ दार्ष्टांतिकेवस्तुतउत्पत्त्या

श्रीमद्भागवतेएवंविरोधस्यनिवारणात् कार्य्यस्यास्यमृषात्मत्वाद्युक्तितोप्यविरो धतः ४३५ शुक्त्यज्ञानाद्यथोत्पत्तीरजतस्यप्रतीतितः वस्तुतस्तदभावेननोत्पत्तिर्नाश एववा ४३६ ननिरोधोनचोत्पत्तिर्नबद्धोनचसाधकः नमुमुक्षुर्नवैमुक्तइत्येषापरमा र्थता ४३७ आत्मानमेवात्मतयाविजानतांतेनैवजातंनिखिलंप्रपंचितं ज्ञानेनभूयो पिचतत्प्रलीयतेरज्ज्वामहेर्भोगभवाभवौयथा ४३८

द्यभावःश्रुत्यैवोच्यते ननिरोधइति आ त्मचैतन्यातिरिक्तंकिमपिनास्तीतिश्रुत्यभिप्रायः ४३७ कार्य्यस्याविद्याकल्पितत्वेनमिथ्यात्वेस्मृतिरप्युच्यते आत्मानमिति अहमात्मागुडाकेशेत्यादिवचनैरात्माकृष्णस्तमात्मतयास्वस्वरूपाभेदेनाविजानतामविदुषांते नैवाज्ञानेननिखिलप्रपंचितंजातंभूयोपितज्ज्ञानेनब्रह्मात्मावबोधेनप्रलीयतेबाध्यतेतत्रदृष्टांतः रज्ज्वामिति

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यथारज्ज्वामहेः सर्प्पस्ययोभोगस्तस्यभवोजन्मरज्ज्वज्ञानात्तदभवोबाधस्तज्ज्ञानात्तद्वदित्यर्थः ४३८ श्रीमद्भा
गवतस्यैववाक्यांतरमुच्यते तस्मादिति तस्मात्पूर्वप्रकारेणनिरूपितहेतोरिदमशेषंजगदसत्स्वरूपं नन्वसत्वे
कथंप्रत्यक्षभानंतत्राह स्वप्नाभमिति यथास्वप्नंवस्तुतः स्वतः सत्ताशून्यम धिष्टानस्वप्नसाक्षिसत्ताध्यासेन
सत्वेनप्रत्यक्षंतथामिथ्यापिजगदधिष्टानसत्तयैवसत्वेनप्रत्यक्षमितिभावः स्वसत्ताशून्यत्वमुक्त्कास्वतोभान
शून्यत्वमप्याह अस्तधिषणमिति अस्तानिरस्ताधिषणाबुद्धिर्भानंयस्मात्प्रेमास्पदत्वायाह पुरुदुःखदुःखमि



तस्मादिदंजगदशेषमसत्स्वरूपंस्वप्नाभमस्तधिषणंपुरुदुःखदुःखं त्वय्येवनित्यसु
खबोधतनावनंतेमायातउद्यदपियत्सदिवावभाति ४३९ इत्यादिबहुभिर्वाक्यैःश्रुत्यास्मृ
त्याथयुक्तितः प्रतीतितःकारणत्वाद्वस्तुतस्तदभावतः ४४०

ति किमत्राधिष्टानंतत्राह त्वय्येवेति
सच्चिदानंदरूपायकृष्णायेत्यादिश्रुत्या नित्यसुखबोधतनौअधिष्टाने मायातउद्यदपियदुद्भवलयमापद्यमानंसदि-
वावभातिउपलक्षणमेतत् भानमिवसुखमिवचाभाति नचतनोःपरिच्छिन्नत्वेन कथंजगदधिष्टानत्वंतत्राह अनंते
इति देशकालवस्तुपरिच्छेदशून्येइति उक्तंच भगवत्पूज्यपादैः सच्चिदात्मन्यनुस्यूते नित्ये विष्णौ प्रकल्पिताः व्यक्त
योविविधाःसर्वाहाटकेकटकादिवदिति ४३९ श्रुतिस्मृत्याद्यापादितफलितार्थोनिगद्यते इत्यादीतिसार्द्धेन हरिः



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रतीतितः कारणत्वाज्जगद्योनिः प्रोक्तः वस्तुतस्तदभावतस्त्वयोनिर्मनइत्यन्वयः ४४० पूर्वोक्तपद्यपदानिसंगृह्य तोत्तरंपदमवतार्यते ससत्यइत्यादिभिर्द्वाभ्यां ४४१ शयभपदमेवव्याख्यायते शयेइति सर्वाशयेबुद्ध्यादिसंघातेभा तियतः सर्वसाक्षितया प्रकाशतेऽतः शयभः उक्तंचभगवता अहमात्मागुडाकेशसर्वभूताशयस्थितः ४४२ अ र्थांतरं वक्तुंभूमिकोच्यते शयस्त्विति तेनशयनशब्देनस्वप्नः कथ्यते त्रयअवस्थात्रयःस्वप्नाइतिश्रुत्यात्ववस्थाप्रवा

जगद्योनिर्हरिःप्रोक्तस्त्वयोनिर्वस्तुतोमतः ससत्योनामकर्ताचपुरुषोनिर्भवस्तथा ४४१
निर्वैरोऽकालमूर्तिश्चसोयोनिःशयभोहरिः शयेसर्वाशयेभातियतोऽतःशयभोभवेत्
४४२ शयस्तुशयनंप्रोक्तंतेनस्वप्नःप्रकथ्यते त्रयावस्थास्त्रयःस्वप्नाःश्रुत्यावस्थाप्रवाच
कः ४४३ शयेषुसर्वावस्थासुभातिसर्वावभासकः सर्वावस्थास्थसाक्षित्वात्कथ्यतेशयभो
हरिः ४४४ एकोदेवःसर्वभूतेषुगूढःसर्वव्यापीसर्वभूतांतरात्मा कर्माध्यक्षःसर्वभूता
धिवासःसाक्षीचेताकेवलोनिर्गुणश्च ४४५

चकोभवति ४४३ भूमिकामवस्थाप्यार्थोनिर्दिश्यते शयेष्विति तथाचशयशब्दाभिधेयेषुउक्तश्रुत्याजाग्रत्यापिस्वपन्नज्ञः स्वप्नेजागरणंयथेतिस्मृत्याचयः सर्वावभा सकः सर्वावस्थास्थसाक्षित्वाद्भातिसहरिः शयभः कथ्यते ४४४ उक्तार्थेप्रमाणतयाश्रुतिः पठ्यते एकइति एक

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

 

एवदेवः द्योतनात्मकसच्चिद्विग्रहोविष्णुः तत्रैकशब्देनस्वगतभेदविवर्जितत्वमुक्तं देवशब्देनचिद्विग्रहतयानिश्चे
तनात्मकशरीरहीनत्वं निर्गुणशब्देनतद्गुणानांस्वरूपात्मकत्वेनागुणत्वमाधाराधेयभावराहित्यंचमायिकभौति
कगुणानांतत्राभावश्चोक्तः तत्रविजातीयभेदनिरासायस्वप्नप्रपंचस्यतदधिष्ठानात्माव्यतिरेकवद्विश्वस्यतद
व्यतिरेकायसर्वाधिष्ठानत्वमाह सर्वभूताधिवासइति सर्वभूतान्यधिष्ठायवसंत्यस्मिन्निति तथातेनवासुश
ब्दार्थोक्त्यावासुदेवत्वमध्यवसितंअधिष्ठानस्यवासुदेवस्यविशेषविग्रहादेः शुक्तित्वादिवदभानमाह सर्वभूते

शेतेपुरुषएष्वेवंशयाःसर्वेतदास्पदाः सूर्य्यचंद्रादयस्तेषुभात्यतःशयभो
हरिः ४४६

षुगूढइति शुक्तेरिदमंशवत्समानसच्चिदात्मनारोपेभानमाह सर्वव्यापीति व्या
प्यस्यव्यापकसत्वातिरिक्तसत्ताशून्यतयाऽऽरोपबाधेनतच्छुद्धत्वमेवाह केवलइति एवंबाधेनविजातीय
भेदनिरासःमुख्याभेदेनजीवैःसजातीयभेदनिरासायाह सर्वभूतांतरात्मेति तत्तदंतरात्मत्वेनाम्नातानांप्राण
मयादीनामंतरःप्रत्यगात्मेत्यर्थः तद्रूपेणैवसर्वावभासकत्वंप्रवर्तयितृत्वंचाह साक्षीतिकर्म्माध्यक्षइतितत्रहेतु
माह चेतेतिचेतयितेत्यर्थः ४४५ भूमिकादर्शनपूर्वकअर्थांतरउच्यते शेतेइति पुरुषःशेतेएष्विति शयाःसर्वेसू ६७
र्य्यचंद्रादयस्तदास्पदाध्यानास्पदत्वेनविहितास्तेषुयतोभात्यतोपिहरिःशयभइत्युच्यते ४४६ ६७

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तदर्थंभगवतएववाक्यंमानमुच्यते यदादित्यमिति आदित्यगतंयत्तेजोयच्चचंद्रमसियच्चाग्नौतन्मामकमेवते-
जोविद्धिनचकथमनेकयच्छब्दनिर्दिष्टनानावर्णतेजसएकतच्छब्देनैकीकृत्याकर्षणमितिवाच्यं वर्णभेदेपितेजः
शब्दवाच्यप्रकाशशक्तेरभेदादतएवाह जगद्भासयतेऽखिलमिति ४४७ अर्थांतरमुच्यते शयेसुप्ताविति शय
शब्दाभिधेयेसुषुप्तौप्रलयेचसर्ववृत्तिज्ञानलयेपियद्वासर्ववृत्तीनांप्रत्येकवृत्तिलयवृत्त्यंतरानुदयांतरालेषुचवृत्तिज्ञा-

यदादित्यगतंतेजोजगद्भासयतेऽखिलं यच्चंद्रमसियच्चाग्नौतत्तेजोविद्धिमामकं ४४७
शयेसुप्तौलयेचैवसर्ववृत्तिलयेप्यथ भातियःस्वप्रकाशत्वात्शयभःस्वप्रभोहरिः
४४८ शयशब्दोत्रभाषायांशतासंख्यातवाचकः तथापारसिभाषायांवस्तुमात्रप्रवा
चकः ४४९ तत्सर्वभासकोविष्णुःशयभःसम्यगुच्यते तत्सर्वभानहेतुत्वंविष्णोःसर्व
श्रुतीरितं ४५०

नाभावेपियःतद्वृत्त्याभावकारणाज्ञानानिचावभासयन्स्वप्रकाशत्वाद्भातिसस्वप्रभो
हरिःशयभइतिमतः ४४८ भाषांतरमिश्रमप्यर्थोलोकप्रसिद्धिमाश्रित्योच्यते शयशब्दइतिसार्द्धेन भाषायांशयः
शतासंख्यातयोर्वाचकोत्रासंख्यातवाचकोग्राह्यःपारसिभाषायांपदार्थमात्रबोधकः ४४९ तत्सर्वस्ययतोभासको
ऽतःशयभशब्देनोच्यतेतत्रमानंनिरूप्यते सर्वश्रुतीरितमिति सर्वोपनिषत्सुश्रुतिभिर्निरूपितं ४५०

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

श्रुतिरेवप्रदर्श्यते तमेवेति तमेवभांतमनुभातिसर्वंतस्यभासासर्वमिदंविभातीतिश्रुतेर्नस्वतोभातिएतत्स्फु
टं ४५१ गुरूपसत्यातदुपदेशेनैवतदाराधनविधानार्थंगुरुंविनास्वप्रकाशस्यापितस्याभानमुच्यते सर्वविभास
कइति भारूपोज्ञानविग्रहःस्वप्रभोऽवेद्यत्वेसत्यपरोक्षव्यवहारयोग्योपिकस्यचिदपिनभातिव्यवहितत्वेनाभान
माशंक्योच्यते व्यापीति कथंतर्हिनभातीत्यपेक्षायामुच्यते मायासमावृतइति ४५२ मायावृतत्वेभगवद्विग्रह

तमेवभांतमनुभात्येतत्सर्वंनतुस्वतः तस्यभासासर्वमिदंविभातीतिश्रुतेःस्फुटं ४५१
सर्वविभासकोविष्णुर्भारूपःस्वप्रभोपिहि नभातिकस्यचिदपिव्यापीमायासमावृतः
४५२ नाहंप्रकाशःसर्वस्ययोगमायासमावृतः मयाततमिदंसर्वंजगदव्यक्तमूर्त्तिना
४५३ गुरुर्यमनुगृह्णातितस्यभातिसदास्फुटं आचार्य्याद्धैवविद्याऽनन्यप्रोक्तागति
रत्रनो ४५४

व्यापित्वेचभगवद्वाक्यमेवमुच्यते नाहमिति अहंयतोयोगमायासमावृतोतःसर्वस्यप्रकाश
तेइतिप्रकाशोनतथाइदंसर्वंजगत्मयामायावृतत्वेनैवाव्यक्तमूर्त्तिनाविग्रहेणततंव्याप्तं ४५३ एवंभगवतःस्वप्रका
शत्वंविभुत्वंमायावृत्याऽभानंचोक्त्वागुर्वनुग्रहेणतद्भानमुच्यते गुरुरिति तत्रप्रमाणत्वेनश्रुतयोनिर्दिश्यंते आ-
चार्य्यादितिसार्द्धाभ्यां हिनिश्चयेनाचार्य्यादेवविद्याब्रह्मात्मावबोधोभवति विद्यात्मनिभिदाबाधइतिभागवतो



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

क्तेः अन्येन गुरुणाऽप्रोक्तात्मब्रह्मात्मैक्ये गतिर्मतिर्नास्ति ४५४ एते उपदिष्टा अर्था अकथिताश्च ४५५ सगुरुमेवा भिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठमिति श्रुतिपाठः सजिज्ञासुः गुरुशिष्यभावसंपादनायोपनयनार्थं समित्काष्ठं पाणौ करे यस्य तथाभूतः सन् तत्त्वज्ञानार्थं गुरुमेवाभिगच्छेत् शरणं व्रजेत् कथंभूतं श्रोत्रियं वेदांतार्थाभिज्ञमन्यथा संशय निवारकत्वासंभवात् तथा ब्रह्मनिष्ठं अन्यथा शिष्ये ब्रह्मनिष्ठोत्पत्त्यसंभवात् इत्यादिश्रुतौ गुरोरनुग्रहादेव मतिर्बो-

यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ तस्यैते कथिता ह्यर्थाः प्रकाशंते महात्मनः ४५५ स
मित्पाणिः श्रोत्रियं वै ब्रह्मनिष्ठं गुरुं व्रजेत् तत्त्वज्ञानार्थमित्यादौ गुर्वनुग्रहतो मतिः ४५६
ततः सत्यो नाम कर्ता पुरुषो निर्भयस्तु यः निर्वैरोऽकालमूर्तिर्योऽयोनिस्तं शयभं जप ४५७
गुरुप्रसाद इत्येषा संबुद्धिर्हेतुगर्भिता गुरुप्रसादो यस्यास्ति तथाभूत जपं कुरु ४५८ सए
वादौ प्रपंचस्य सर्गादासीत्स नीश्वरः युगादौ च विसर्गे सन् स ब्रह्मादिवपुर्हरः ४५९

धो भवतीति निर्द्धारः ४५६ व्याख्यात गुरुजप्यस्याद्यपदानि संगृह्योदाहृत श्रुतिभिर्ज्ञानस्य हरि गुरुभक्त्यधीनतया गुरूपदिष्टगुरुप्रसादजपेति शब्दार्थ उच्यते तत इत्यादि द्वाभ्यां ४५७ गुरुप्रसाद इत्येषेत्यत्र संध्यभावश्छंदोनुरोधेन वा क्ये संहितायाविवक्षाधीनत्वात् संबुद्धिः संबोधनं हेतुगर्भितो यस्या इति तथा जपेति पदस्य व्याख्यानं जपं कुर्विति ४५८ परिशि

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

षपद्यांशार्थउच्यते सएवेति सएवेश्वरोहरिः प्रपंचस्यसर्गादादौ पूर्वंसन् सत्यआसीत् युगादौ विसर्गावसरेचसएव ब्रह्मादिवपुर्हरिःसन् वर्त्तमानआसीदादिशब्देनात्रमरीच्यादयोज्ञेयाः ४५९ वर्तमानेपिसहरिरेवसन् कारणत्वा त्साक्षित्वाच्चमृद्व्यतिरेकेण घटादेःस्वप्नदृग्व्यतिरेकेणस्वप्नप्रपंचस्य सत्वासत्ववद्विश्वस्यतद्व्यतिरेकेणसत्वा- संभवात् तथांतेपिसहरिरेवसन् अंतेसत्वापादनायैवोच्यते लयाधारत्वतइति नारायणे प्रलीयंतेनिषेधशेषो

सएवसन्वर्तमानेतथांतेपिसएवसन् लयाधारत्वतस्तद्वन्निषेधस्यावधित्वतः ४६० इदमग्रेसदेवासीदैतदात्म्यमिदंजगत् नेहकिंचननानास्तिह्येवमादिश्रु तीरणात् ४६१ अधिष्ठानातिरेकेणह्यारोपोनैवसन्मतः अधिष्ठानंसदेकंस्या त्सएवब्रह्मद्वयोहरिः ४६२

जयतादशेषइत्यादिश्रुतिस्मृतिभ्यः ४६० सर्गात्पूर्वंसत्वेपिश्रुतिरुच्य ते इदमग्रइति वर्तमानेपितस्यैवसत्वेतादितरबाधेचश्रुतिरुच्यते ऐतदात्म्यमिति आदिशब्देनअथातआदेशोनेति नेतीत्याद्याःश्रुतयोग्राह्याः ४६१ युक्तितोप्यतन्निरासेनतस्यैवसत्वंनिर्द्धार्य्यते अधिष्ठानातिरेकेणेति उक्तंचैतद्वेद- स्तुतिव्याख्यायांश्रीवल्लभाचार्य्यैरपि सद्बुद्ध्यासर्वदासद्भिर्नसेव्यमखिलंजगत् भ्रांत्यासद्बुद्धिरत्रेतिसंतंकृष्णंभजेद्बु ६९
धः खपुष्पादिसमत्वाद्धिमिथ्याभूतंजगद्यतः अधिष्ठानात्तुसद्बुद्धिस्तंकृष्णंसततंभजेत् ४६२



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एवंभगवदुपदिष्टमेवसर्वश्रुतिरहस्यंशिष्येषुप्रख्यापयामासेत्युच्यते नानाकायेति ४६३ भगवतायत्सर्वश्रुतिसा
रंगुरुवेउपदिष्टंतदेवपूर्वंब्रह्मणेप्युपदिष्टमित्युच्यते एतदेवेति ४६४ तद्ब्रह्मणेउपदिष्टंसमानार्थत्वप्रदर्शनायात्रा
पिलिख्यतेश्लोकसप्तकं ज्ञानमित्यादि रामसिंहंगुरुंवंदेबोधदंचसदासुखं विद्यानंदप्रदंदीक्षागुरुंश्रीहरिनाथकं
१ श्रीहरिंस्वेष्टदेवंचनत्वातस्यकृपावशात् मूलभागवतंव्याख्यांकुर्वेगुर्वनुमोदितः २ श्रीमन्नारायणोवेदैश्वसर्वैः

नानकायहरिःप्राहतज्जपन्वहिरागतः तदेवश्रुतिसारंहिजप्यंशिष्येष्ववर्णयत् ४६३
एतदेवहरिःपूर्वंब्रह्मणेऽवर्णयत्प्रभुः ब्रह्मनारदव्यासाद्यैःपुनस्तद्विपुलीकृतम् ४६४
ज्ञानंपरमगुह्यंमेयद्विज्ञानसमन्वितं सरहस्यंतदंगंचगृहाणगदितंमया ४६५

रहमेववेद्योवेदांतकृद्वेदविदेवचाहमित्यादिभिः सर्ववेदकृत्सर्ववेदांतसारंश्रीमद्भागवतंब्रह्मणेउपदिशंस्तत्रव
क्तव्यार्थसंग्रहंकुर्वंस्तंगृहीतुंब्रह्माणंसन्मुखीकरोति ज्ञानमिति नचभागवतस्यवेदांतसारत्वेप्रमाणाभावइति
वाच्यं सर्ववेदांतसारंयद्ब्रह्मात्मैकत्वलक्षणं वस्त्वद्वितीयंतन्निष्ठंकैवल्यैकप्रयोजनमितितत्रैवनिर्देशात्तत्रभागव
तस्यसर्ववेदांतसारत्वंप्रतिज्ञायतदापादनायैवहेतुगर्भितंविशेषणमाह ब्रह्मात्मैकत्वलक्षणमिति अत्रब्रह्मशब्दे
नमायोपहितः सर्वज्ञत्वसर्वेश्वरत्वसर्वनियंतृत्वादिधर्मविशिष्टः परमात्मातत्पदवाच्यआत्मशब्देनचाविद्याद्युपहि

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तोल्पज्ञत्वादिगुणविशिष्टोजीवात्मात्वंपदवाच्यस्तयोः श्रुतिसिद्धैक्यस्यविरोधेनानुपपत्तौ सोयंदेवदत्त इत्यादौ तद्देशकालछत्रचामरादिविशिष्टस्यैतद्देशकालदंडकमंडल्वादिविशिष्टेनैक्यानुपपत्याविरुद्धांशपरित्यागेनाविरुद्धदेवदत्तपिंडाभेदबोधवत् विरुद्धमायाऽविद्याद्युपाधिसर्वज्ञत्वाल्पज्ञत्वादिधर्मरूपांशौ विहायसच्चिदानंदस्वरूपात्मकत्वलक्षणमैक्यंजहदजहल्लक्षणयालक्षयतीति तथा ननुजहदजहल्लक्षणयात्मैक्यसिद्धावप्युपाध्यविशेषान्नाद्वैतपर्य्यवसानंतत्राह वस्त्वद्वितीयंतन्निष्टमिति नहिलक्षणयैक्यंबोधयन् शास्त्रमुपाधिंपृथगवस्थाप्यैक्यंबोधयतियेनैवमाशंक्येत किंतु नेहनानास्तिकिंचनेत्यादिनोपाधींस्तदधीन तद्धर्मादिनिखिलद्वैतमप बाध्ययदद्वितीयंवस्तुतदेकनिष्टंभवतीति तथाचवेदांतेषुश्रूयमाणसर्वोपास्तीनांचित्तैकाग्र्यद्वाराब्रह्मविद्यैकपर्य्यवसायितयाब्रह्माद्वैतविद्यैकनिरूपकश्रीमद्भागवतस्यसर्ववेदांतसारत्वमुपपन्नंविषयतः सारत्वमुक्त्वाफलतोपिसारत्वमाह कैवल्यैकप्रयोजनमिति ननुब्रह्मावबोधस्यब्रह्मविदाप्नोतिपरंब्रह्मवेदब्रह्मैवभवति यएवंवेदविष्णुरेवभवतीत्यादिश्रुतौ ब्रह्मावाप्तिफलश्रवणात्कथंफलांतरोक्तिरितिचेन्न नित्यमेवप्राप्तंब्रह्मतस्यमायाऽविद्याद्युपाधिकल्पितभेदभ्रममंतरेणाप्राप्त्यसंभवाद्बोधेनभेदभ्रमबाधद्वाराकैवल्यमृते प्राप्त्यंतरासंभवात्कैवल्यस्यैव ब्रह्मावाप्तिशब्दार्थत्वं यन्मेमत्स्वरूपविषयंपरमगुह्यंज्ञानंतदंगंसाधनकलापंचमयागदितंगृहाणेत्यन्वयः तत्रयज्ज्ञानंकर्मविषयंतद्वैदिकमपिनगुह्यंब्राह्मणोयजेदित्यादौवाह्याध्यस्तब्राह्मणत्वादिजातिमद्देहादिपुर-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्कारेणतत्प्रवृत्तेः प्लवाह्येते अदृढाः यज्ञरूपाअष्टादशोक्तमवरंयेषुकर्मेत्यादिभिरदृढत्वश्रवणाच्चउपाधिविविक्तकेवलप्रत्यक्स्वरूपविषयज्ञानमांतरत्वाद्गुह्यंब्रह्माभेदज्ञानंतुपरमगुह्यंतदप्युक्तंकैवल्यंसात्विकंज्ञानमन्निष्ठंनिर्गुणंस्मृतमितितत्रसत्वस्याभानान्यथाभानप्रयोजकत्वाभावेनाध्यासानापादकत्वादुपाधिविविक्तज्ञानंसात्विकंब्रह्मात्मावबोधंविनाविवेकज्ञानमात्रेणगुणबाधानुपपत्त्याननिर्गुणंमत्स्वरूपेआत्मत्वनिष्ठारूपंमन्निष्ठंतुमायागुणबाधकत्वान्निर्गुणमित्यर्थः किंभूतंतज्ज्ञानंतत्राह विज्ञानसमन्वितमितिविशेषेणप्रमेयगतसंशयनिरासेनज्ञायते स्वरूपं येनताद्विज्ञानंमननंफलोपकार्य्यंगंतेनसमन्वितं रहस्यंनि

यावानहंयथाभावोयद्रूपगुणकर्मकः तथैवतत्वविज्ञानमस्तुतेमदनुग्रहात् ४६६

दिध्यासनाख्यंध्यानंतत् द्विविधंयत्नसाध्यमयत्नसाध्यंचतत्राद्यंसाक्षात्कारात्पूर्वंस्मरणभक्त्यंतःपातितयासाधनरूपंद्वितीयंतुज्ञानिनस्तस्यकार्य्यंनविद्यतेइत्यादिनाकर्तव्यप्रवृत्त्यनुपपत्त्यायत्नंविनैवस्वाभाविकजीवन्मुक्तिदशायांस्वरूपानुसंधानं ब्रह्मभूतःप्रसन्नात्मानशोचतिनकांक्षति समःसर्वेषुभूतेषुमद्भक्तिंलभतेपरामित्यादिवाक्यसिद्धंपराभक्तिरूपंतेनसहितंतदंगंसाधनजातंच ४६५ ननुभगवद्गदितज्ञानग्रहणायनाहंसमर्थस्तत्राह यावानिति यावान्विभुसच्चिदानंदैकरससर्वांगः तथायथाभावःपरमार्थसद्रूपो

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यद्वा यथास्वभक्तेषु वात्सल्यादिभावो यस्य स तथा यद्वा यथा नृत्यादौ नेत्रकरचालनादिभावो यस्य स तथा ननु स्वरूपस्य भवतु वेद्यत्वं करचालनादिकर्म्मणां तदतिरिक्तत्वेनातोन्यदार्तमित्यादिश्रुत्या वेद्यत्वाभाव इत्याशंक्याह यद्रूपगुणकर्मक इति यस्य रूपाणि स्वरूपाण्येव गुणाः कर्म्माणि च यस्य स तथा तथा च भगवद्गुणानां कर्म्मणां च स्वरूपात्मकत्वेनावेद्यत्वाभाव एवेति भावः एवं यादृक्‌ मत्स्वरूपं तथैव तत्वविज्ञानं परमार्थवस्त्वपरोक्षं ते मदनुग्रहादेवास्तु यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ इत्यादिश्रुतौ गुर्वीश्वरभक्तानां तयोरनुग्रहाज्ज्ञानलाभाध्यवसाये पि तवतु गुरुरिष्टदेवश्चाहमेवेति मदनुग्रहादेवास्तु एवमनुग्रहाधीनतत्वज्ञानोत्पत्त्युक्त्या वासुदेवे भगवति भक्तियोगः प्रयोजितः जनयत्याशु वैराग्यं ज्ञानं यत्तदहैतुकं मद्भक्तिविमुखानां हि शास्त्रगर्तेषु मुह्यतां नज्ञानं न च मोक्षः स्यात्तेषां जन्मशतैरपीत्यादिवाक्यशतैः यस्यास्ति भक्तिर्भगवत्यकिंचना सर्वैर्गुणैस्तत्र समासते सुरा इत्यादिना स्वप्रभावलेशमात्रेण सर्वसाधनापादिका या या साधनसंपत्तिः पुरुषार्थचतुष्टये तया विना तदाप्नोति नरो नारायणाश्रय इत्यादिना सर्वसाधनप्रतिरूपतयाऽभिषिक्ता साधनस्वरूपानवधा भक्तिरनुग्रहाविर्भाविका मुख्यं ज्ञानोत्पत्तिसाधनमिति ज्ञापितम् ४६६ ५ ५



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एवंतत्वज्ञानायब्रह्माणंसंमुखीकृत्यस्वानुग्रहात्तत्प्राप्तिंसंभाव्यास्त्वितिवरदानेनतस्मिंस्तद्ग्रहणशक्तिमाधाय तत्वमेवाह अहमेवसच्चिदानंदानंतविग्रहः स्वरूपात्मकधामोपकरणपारिषदादिरूपः सत्यात्मप्राणाराममि-त्यादिश्रुतिसिद्धस्तवापरोक्षः सत्वस्यमन्नियम्योपाधेरभानान्यथाभानाप्रयोजकतयाशुद्धस्वरूपभूतः सर्वा धिष्ठानात्मकएवाग्रेसर्गात्पूर्वमासंश्रूयमाणमच्छब्दस्यानुपपत्तिमंतरेणार्थांतरकल्पनानुपपत्तेः सर्गादग्रेका र्य्यस्यकारणाव्यतिरेकेणप्रतीतेरप्यभावान्ममैवसर्वकारणत्वादहमेवासमितिभावः आत्मावाइदमेकएवा ग्रआसीदितिश्रुतेः नचाग्रेइतिपदेनकालसद्भावप्रतीतेरेवकारानुपयोगइतिवाच्यं कालोस्मीतिभगवद्वचना

## अहमेवासमेवाग्रेनान्यद्यत्सदसत्परं

त्तस्यतदनतिरेकात् किंचसुषुप्तौअज्ञानावृतस्वरूपातिरिक्तकालाभानेपिसमुत्थितस्यकालवासनाविष्टतया तदासुखमस्वाप्संनकिमप्यवेदिषमितितदाशब्देनकालपरामर्शस्यदर्शनवत्तदुक्त्युपपत्तेः उक्तंचवृद्धैः काला भावेपुरेत्युक्तिःकालवासनयायुतं शिष्यंप्रत्येवतेनात्रद्वितीयंनहिशंक्यतेइति किंचाग्रेइतिपदस्यपूर्वत्ववा चित्वेपिकालवाचित्वाभावएवेति नतच्छंकावकाशः नचपूर्वत्वाभिधानेभूतत्वप्रतीतेःकथंकालंविनाभूतत्वा दिव्यवहारइतिवाच्यं कालास्वीकुर्वतामपिसांख्यानांभूतभविष्यदादिव्यवहाराबाधात् ननुकथंसद्रूपविष्णो

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रेवपूर्वसत्वमुच्यते यतः असद्वाइदमग्रआसीत् असदेवेदमग्रआसीत्तत्सदासीत् तद्धैकआहुरसदेवेदमग्र-
आसीदितिश्रुतिषु असत्पूर्वकत्वश्रवणात्तद्धेदंतर्ह्यव्याकृतमासीत् तन्नामरूपाभ्यामेवव्याक्रियतेत्यत्रचाक
र्तृकैवसृष्टिःश्रूयतेतत्राह आसमेवेति नआसमितिननचोदाहृतश्रुतिविरोधः समाकर्षादिति सूत्रेभगवद्व्या
सेनतद्विरोधपरिहारस्यदर्शितत्वात् तथाहि असद्वाइदमग्रआसीदितिनासत्कारणत्वविवक्षा असन्नेवसभ
वत्यसद्ब्रह्मेतिवेदचेत् अस्तिब्रह्मेतिचेद्वेदसंतमेनंततोविदुरित्यसदपवादेनसतएवब्रह्मणोऽन्नमयादिगु
हांतःस्थत्वेनप्रत्यक्त्वमुक्त्वासोऽकामयादितिसमाकृष्यततःसृष्टिंनिरूप्यतत्सत्यमित्याचक्षतइत्युपसंहृ
त्यतत्रैवेमंश्लोकमाह असद्वाइति अत्रासद्यद्यभिप्रेतंस्यात्तदान्यंसमाकृष्यान्योक्तौवाक्यमसंबद्धंस्यात्त
स्मादव्यक्तनामरूपतयासूक्ष्मत्वेनदुर्लक्ष्यअसदित्युपचर्य्यते असदेवेदमग्रआसीदित्यत्रापितत्सदासी
दितिसमाकर्षादियमेवगतिः तद्धैकआहुरसदेवेदमग्रआसीदित्यत्रापिनअत्यंतासत्वोक्तिर्भ्रांतकल्पनानुवा
देनश्रौतसत्पक्षदार्ढ्यमेव तद्धेदंतर्ह्यव्याकृतमासीदित्यत्रापिनाहेतुव्याकृतिःसएषइहप्रविष्टइतिव्याक
र्तुः प्रविष्टत्वेनसमाकर्षात्कर्तुरभावेकमाकृष्येतचेतनस्यैवायंप्रवेशःपश्यंश्चक्षुःशृण्वन्श्रोत्रमितिचेत
नत्वोक्तेः अनेनजीवेनात्मनाऽनुप्रविश्यनामरूपेव्याकरवाणीतिश्रुत्यंतरेपिव्याकृतेश्चेतनहेतुत्वदर्शना
त् लूयतेक्षेत्रंस्वयमेवेतिवद्व्याक्रियतेइत्यत्रापिसत्येवकर्त्तर्य्युपपत्तेश्चएवकारव्यावृत्तिमाह नान्यादिति



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नान्यत्किंचनमिषादितिश्रुतेः मिषदितिचलंनश्वरमित्यर्थः अन्यच्छब्दार्थमेवविवृणोति यत्सदसत्परमिति सत्स्थूलंअसत्सूक्ष्मंपरंतयोःकारणंचेत्यर्थः नचभवतुस्थूलसूक्ष्मयोरभावः नासदासीन्नोसदासीदितिश्रुतेः तमआसीदितिश्रुतेः कथंकारणाभावोक्तिरितिवाच्यं नोसदासीत्तमआसीदित्यत्रतमसः सत्वप्रतिषेधादासीदितिप्रयोगस्यैवानुपपत्तेः सद्योगात्तमसः सत्वंनस्वतस्तन्निषेधनादितिवृद्धोक्तेः सत्वनिषेधेनस्वतस्तत्प्रयोगानुपपत्तावपिसदधिष्ठानाध्यासिकसंबंधेनतत्सत्तयैवासीदितिप्रयोगसंभावनायामपितच्छक्तित्वेनैवतदन्यत्वानन्यत्वाभ्यामनिर्वचनीयतयानान्यदितिभगवदुक्त्यनुपपत्त्यभावात् नहिवन्हेःशक्तिस्तदन्यातत्पार्थक्येनतत्सत्तास्वरूपाभानात् नापिवन्हेरेवतच्छक्तिस्तथात्वेशक्तिशक्तिमद्भावानुपपत्तेरेकस्मिन्नाधाराधेयभावस्यवक्तुमशक्यत्वात्प्रतिबंधकमणिमंत्रादिसंनिधौवन्हिस्वरूपसमवधानेऽपिस्फोटाख्यकार्य्यादर्शनेनतत्प्रतिरोधदर्शनात् नचान्यत्वानन्यत्वोभयात्मकत्वंशक्तेर्विरोधात् मिथोभावाभावरूपयोस्तयोरेकाधिकरणत्वासंभवात्तस्मादन्यत्वानन्यत्वतदुभयात्मकत्वैर्निर्वक्तुमशक्यैवशक्तिः तथैवतमोरूपासतः शक्तिरप्यनिर्वचनीयतयानतदन्यासीत् किंचसतःशक्तेस्तदनन्यत्वासंभवेनैवनसत्वं कार्य्यदर्शनेनचनासत्वंविरोधाच्चनोभयात्मत्वमिति सत्वासत्वान्यत्वानन्यत्वतदुभयात्मत्वेभ्योनिर्वचनीयतयाशक्तेर्मिथ्यात्वेनतत्कार्य्यस्याप्यनिर्वचनीयतयामिथ्यात्वात्तदातदनुद्भवाच्चनान्यदासीदित्यभिप्रायः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नन्वनिर्वचनीयत्वेनमायायाजगतश्चानिर्वचनीयत्वोक्तौभवन्मतेब्रह्मणोप्यनिर्वचनीयतयामिथ्यात्वाप-
त्तिस्तथाचब्रह्मापिमिथ्या अनिर्वचनीयत्वादिति प्रयोगापत्तिरितिचेत् नअत्रब्रह्मापीत्यपिशब्देनसर्वप्रपंचस्या
पिपक्षांतःपातितयाहेतोरनुपसंहारित्वापत्तेः अन्वयव्यतिरेकदृष्टांतरहितोह्यनुपसंहारीसर्वस्यपक्षत्वेतदित
रदृष्टांतालाभात् अपिशब्दानुक्तावपिशब्दब्रह्मादायसिद्धसाधनताचेतनविशेषणेपिब्राह्मणाद्यादायसि
द्धसाधनत्वंपरत्वविशेषणेपिमायोपहितकारणब्रह्मादायसिद्धसाधनंनचसिद्धसाधनताया अदूषकत्वंअ
नधिगतार्थगमकस्यैवप्रमाणत्वेनसिद्धस्यानधिगतत्वाभावात्तत्साधकस्यप्रमाणत्वानुपपत्तेः संदिग्धसाध्य
वान् हिपक्षः साध्यस्यतत्रासिद्धत्वेनिश्चितसाध्यवान् सपक्षइतितल्लक्षणापत्त्यापक्षत्वानुपपत्तेस्तदसिद्धौच
पक्षस्यैवहेत्वाश्रयतयाहेतोराश्रयासिद्ध्यापत्तिश्च किंचात्रब्रह्मशब्देनास्मदभिमतस्वरूपंप्रतीयतेनवा नां
त्यः पक्षस्वरूपाभानेप्याश्रयासिद्ध्यातत्रहेतुसाध्यादिसमर्थनानुपपत्तेः नाद्योब्रह्मशब्देनतत्प्रतीतौब्रह्म
शब्दगोचरत्वेनैवानिर्वचनीयत्वहेतोरसिद्ध्याशब्दोअनित्यश्चाक्षुषुत्वाद्घटवदित्यादिवत्पक्षेहेत्ववर्तनलक्ष
णस्वरूपासिद्ध्यापत्तेः किंचब्रह्मणोपिमिथ्यात्वंवदताकिंचित्सत्स्वीक्रियतेनवास्वीक्रियतेचेत्तज्जडंचिद्वाज
डंचेत्तस्यस्वतःसिद्धत्वानुपपत्त्यातत्सिद्धौचित्स्वीकारापत्तेःचिच्चेत्सिद्धंनःसमीहितंसच्चिदेकसिद्धौवाद्वैतवा
दिनामिष्टसिद्धेः नाम्न्येवविवादोनवस्तुनिनस्वीक्रियतेचेन्निरधिष्ठानारोपासिद्ध्याब्रह्मणोमिथ्यात्वासिद्धिः



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

किंचमिथ्यात्वशब्देनासत्वमभिप्रेयते सद्विलक्षणत्वंवासदसद्भ्यामनिर्वचनीयत्वंवानाद्यद्वितीयौतथात्वेतु-
च्छत्वापत्याप्रत्यक्षेणावभासमानशुक्तिरूप्यस्वप्नप्रपंचादौतदसंभवेनदृष्टांतेसाध्यवैकल्यं ततश्चव्याप्त्यसि-
द्धिः हेतुसत्वेसाध्यसत्वमन्वयव्याप्तिः साध्याभावेहेत्वभावोव्यतिरेकव्याप्तिरत्रतुयत्रयत्रस्वप्नादौ अनिर्वच
नीयत्वं हेतुस्तत्र प्रत्यक्षत्वेनतुच्छत्वाभावइतिनान्वयव्याप्तिस्तथातत्रैवस्वप्नादौतुच्छत्वसाध्याभावेप्यनिर्व
चनीयत्वहेतुसद्भावान्नव्यतिरेकव्याप्तिरतएवनिश्चितसाध्याभाववद्विपक्षवृत्तित्वेनसाध्याभाववद्वृत्तिर्हेतुः
साधारणानैकांतिकइतिसव्यभिचारपर्य्यायसाधारणानुपसंहारित्रिविधानैकांतिकांतःपातिसाधारण्यंचशश
शृंगादौनिश्चिततुच्छत्वसाध्यवतिसपक्षेचानिर्वचनीयत्वहेतोरवृत्तेः विपक्षमात्रवृत्तितयासाध्याभावव्याप्तो
हेतुर्विरुद्ध इतिसाध्याभावापादकत्वेनविरुद्धताच तृतीयेतुसदसद्भ्यामनिर्वचनीयत्वस्यसाध्यत्वेतस्यैवहे
तुत्वेनहेतोःसाध्यावैशेष्यं तथाचसाध्यस्यपक्षेसंदिग्धतयाहेतोरपिसंदिग्धासिद्धतयास्वरूपासिद्धिरेवपक्षत्र
येपितत्त्रिविधविकल्पितसाध्याभावस्यसत्यत्वस्यब्रह्मणिपक्षेसत्यंज्ञानमनंतंब्रह्मतदेववर्त्ततदुसत्यमाहुस्तदेवब्र
ह्मपरमंकवीनामित्यादिश्रुतिभिर्बोधनात् यस्यसाध्याभावःप्रमाणांतरेणबोधितःसबाधितइति बाधलक्षण
सद्भावाद्बाधश्च किंचानिर्वचनीयत्वंकिंनामसदसद्भ्यामनिर्वचनीयत्वंवाशब्दजन्यज्ञानाभास्यत्वंवाआद्येउदा-
हृतश्रुत्यैवपक्षेब्रह्मणिसत्यत्वाध्यवसायात्स्वरूपासिद्धिः द्वितीयेसर्प्परूप्यादिशब्दजज्ञानभास्येरज्जुसर्प्पेशु

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

क्तिरूप्यादौ घटपटादिशब्दजज्ञानभास्येस्वप्नजाग्रद्दृष्टादौ साध्यवतिसपक्षे दृष्टांते साधनवैकल्यं तथाचोक्तरू
पमिथ्यात्वसाध्याभाववतितुच्छेशशशृंगादौविपक्षेतच्छब्दजज्ञानभास्येचावर्त्तमानत्वेसति पक्षमात्रवृत्तित्वेनश
ब्दजज्ञानाभास्यत्वरूपानिर्वचनीयत्वहेतोः सपक्षविपक्षव्यावृत्तः पक्षवृत्तिरसाधारणइतिलक्षणलक्षितासाधा
रण्यंचनचशब्दजज्ञानाभास्यत्वेब्रह्मणोवेदांतवेद्यत्वानुपपत्तिवेदांतानांतद्गताज्ञानावरणबाधकत्वेनैवतदभास
कत्वेपितत्रप्रमाणत्वस्यतस्यचतज्जन्यज्ञानप्रयुक्ताज्ञानबाधफलभाक्त्वेनैवस्वप्रकाशत्वेनतदभास्यत्वेपितद्वेद्य
त्वस्यचोपपत्तेः नचहेतौविकल्पमनुद्भाव्यानिर्वचनीयत्वशब्दमात्रेणमिथ्यात्वापादनंतथात्वेस्वर्णंनकुंडलादिभू
षणोपादानंकनकशब्दवाच्यत्वात् धर्त्तूरवत् धर्त्तूरफलंकटकादिबहुमूल्यभूषणोपादानंकनकत्वात्स्वर्णव-
त्सूर्य्यगभस्तयोदुग्धदोहागोत्वाद्धेनुवत् धेनवोनदुग्धदोहागोत्वाद्गभस्त्यादिवत् मंदारोजगदवभासकोऽ
र्कत्वात्सूर्य्यवत्सूर्य्योनावभासकोऽर्कत्वात्मंदारवत् विष्णुर्नसंसारतारकोहरित्वात्कप्यादिवत् कप्यादिस्तत्ता
रकोहरित्वाद्विष्णुवदित्याद्याभाससमत्वापातात् जडत्वपरिच्छिन्नत्वादयश्चात्रोपाधयः साध्यव्यापकत्वेस
तिसाधनाव्यापकोहिउपाधिः यत्रयत्रहेतुस्तत्रस्तत्रसाध्यमितिव्याप्तौव्याप्तिनिरूपकंव्यापकंसाध्यंव्याप्याश्च
योव्याप्योहेतुस्तदेवलिंगंसाध्यव्यापकत्वंचसर्वसाध्यवत्सुनियमेनवर्तमानत्वंसाधनाव्यापकत्वंक्वचित्साधन
वतिवर्तमानत्वेपिसर्वत्रसाधनवत्सुनियमेनावर्तमानत्वंजडत्वपरिच्छिन्नत्वादयश्चमिथ्यात्वसाध्यवतिसर्वत्र ७४

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

व्यापकत्वेनसाध्यव्यापकत्वेपिपक्षेवर्तमानत्वाभावात्साधनाव्यापकत्वादुपाधयः नचस्वप्नाकाशादौतत्र
स्वपूतृपुरुषेषुचापरिच्छिन्नत्वचेतनत्वाभ्यांसतिमिथ्यात्वेसाध्येपरिच्छिन्नत्वजडत्वयोरभावात्साध्याव्याप-
कत्वमितिवाच्यं स्वप्नाकाशादौदेशपरिच्छेदासंप्रतिपत्तावपिवस्तुपरिच्छेदसंप्रतिपत्तेः स्वप्नपुरुषदेहादौजडत्वसं
प्रतिपत्तेश्चतदात्मनश्चेतनस्यजडत्वाभावेपितत्रब्रह्माभेदेनमिथ्यात्वासंप्रतिपत्यासाध्यासत्वेनतदव्यापकत्वाभा
वात् ब्रह्मपरमार्थसत्यंचिद्रूपत्वाद्ब्रह्मातिरेकेमिथ्यारूप्यादिवदितिप्रतिपक्षानुमानपराहतत्वंच नचास्यकेवलव्य
तिरेकिणः साध्यस्यपक्षेप्रसिद्धौअनुमानाप्र वृत्तिरन्यत्रप्रसिद्धौतत्रहेतुसत्वेअन्वयव्याप्तिसद्भावेनव्यतिरेकमा
त्रव्याप्तिकंकेवलव्यतिरेकीतिलक्षणककेवलव्यतिरेकित्वभंगः अवृत्तौसपक्षव्यावृत्तत्वेनासाधारण्यमितिसर्व
थासाध्याप्रसिद्धिरेवेतिवाच्यं सद्विलक्षणत्वंक्वचिदत्यंताभावप्रतियोगिधर्मत्वाद्रूपवदित्यनवधारितधर्मिक
सत्यत्वसिद्धौकेवलव्यतिरेकिणापक्षेस्थापनोपपत्तेः नचप्रमेयत्वादिषुव्यभिचारस्तेषुधर्मत्वहेतुसत्वेपिक्व
चिदत्यंताभावप्रतियोगित्वाभावात् सर्वंप्रमेयंसर्वमभिधेयंसर्वव्यावृत्तमित्यंगीकारादितिवाच्यं अप्रमेयमना
दिंचयतोवाचोनिवर्ततेयद्वाचानभ्युदितमित्यादिभिस्तेषामत्यंताभावस्यब्रह्मणिश्रुत्यैवापादनात् किंचप्रमेय
त्वंप्रमेयत्वेवर्ततेनवाऽऽद्येआत्माश्रयोद्वितीयेस्वस्मिन्नेवात्यंताभावप्रतियोगित्वेनकेवलान्वयित्वक्षतिः अ
पिचप्रत्येकप्रमाविषयत्वंप्रमेयत्वंकेवलान्वयिसर्वप्रमाविषयत्वंवानोभयथापिघटप्रमाविषयत्वस्यपटेपटप्र-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

माविषयत्वस्य घटे सर्वप्रमाविषयत्वस्य सर्वत्र घटपटादावत्यंताभावेनकेवलान्वयित्वानुपपत्तेः एवमभिधेयत्वादावप्यूह्यं तथाचप्रमेयत्वादिकेवलान्वयित्ववादिनांकुतार्किकाणामेवसाध्याप्रसिद्धाकेवलव्यतिरेक्यसंभवोनौपनिषदानांनचसाध्यव्याप्तहेतोः पक्षधर्मताज्ञानलक्षणलिंगपरामर्शस्यैवानुमानत्वे नात्रकेवलव्यतिरेकिणिहेतुसाध्यव्याप्तिस्थलाभावेनतद्भास्यसिद्धापरामर्शासंभवइतिवाच्यं अन्वयिन्यन्वयव्याप्तिवद्व्यतिरेकिणिव्यतिरेकव्याप्तहेतोरेवसाध्यगमकत्वात् नचहेतुनासाध्यसिद्धौसाध्याभावहेत्वभावव्याप्तेरनुपयोगइतिवाच्यं यत्रसाध्याभावस्तत्रहेत्वभावइतिविपक्षेव्याप्तिमुदाहृत्यनतथाचायंतस्मान्नतथेत्यत्रतदभावोक्त्या

पश्चादहंयदेतच्चयोऽवशिष्येतसोस्म्यहं ४६७

अभावाभावस्यभावत्वेनहेतुसाध्यव्याप्तावेवतत्पर्य्यवसानात् नचैतादृक्स्थलेऽर्थापत्तिरेवमानमितिवाच्यं यथोपयोगोरुभयोरपिमानत्वोपपत्तेः एवंसर्गात्पूर्वंस्वसत्वमुक्त्वाविसर्गेऽपितदाह पश्चादिति पश्चाद्विसर्गावसरेब्रह्मादिरूपेणापिअहमेवतदप्युक्तं त्वमेकएवास्यसतःप्रसूतिस्त्वंसंनिधानंत्वमनुग्रहश्चत्वन्मायया संवृतचेतसस्त्वांपश्यंतिनानानविपश्चित्तोयेसत्वंरजस्तमइति प्रकृतेर्गुणास्तैर्युक्तः परःपुरुषएकइहास्यधत्ते स्थित्यादयेहरिविरंचिहरेतिसंज्ञाः श्रेयांसितत्रखलुसत्वतनोर्नृणांस्युरित्यादिना यद्वापश्चात्प्रपंचस्यलयोत्तरमप्यहमेवस ७५

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

र्णाणिचभूतानिनारायणादेवसमुत्पद्यंतेनारायणेप्रलीयंते नष्टेलोकेद्विपरार्द्धावसानेमहाभूतेष्वादिभूतंगते
षुव्यक्ताव्यक्तेकालवेगेनयातेभवानेकःशिष्यतेशेषसंज्ञइत्यादिश्रुतिस्मृतिभ्यः यच्चैतन्मध्येपरिदृश्यमानंतदप्य
हमेवकार्य्यस्यकारणाव्यतिरेकात् ऐतदात्म्यमिदंसर्वंनारायणएवेदंसर्वंयद्भूतंयच्चभाव्यंपुरुषएवेदंविश्वंस
र्वमिदंपुराणः यस्मिन्निदंसंचविचैतिसर्वंयस्मिन्देवाअधिविश्वेनिषेदुः तदेवभूतंतदुभव्यमाहुइदंतदक्षरे
परमेव्योमन् यथासौम्येकेनमृत्पिंडेनसर्वंमृण्मयंविज्ञातंस्याद्वाचारंभणंविकारोनामधेयंमृत्तिकेत्येवसत्य
मित्यादिश्रुतिभ्यः नयत्पुरस्तादुतयन्नपश्चान्मध्येपितन्नव्यपदेशमात्रं भूतंप्रसिद्धंचपरेणयद्यत्तदेवतत्स्या
दितिमेमनीषा सर्वेषामिहभावानांभावार्थोभवतिस्थितः तस्यापिभगवान्कृष्णःकिमतद्वस्तुरूप्यतां आत्मै
वतदिदंविश्वंसृज्यतेसृजतिप्रभुः त्रायतेत्रातिविश्वात्माह्रियतेहरतीश्वरः यदिदंमनसावाचादृश्यतेन्यैर
पींद्रियैः अहमेवनमत्तोन्यदितिबुध्यध्वमंजसेत्यादिस्मृतिभ्यस्तदनन्यत्वमारंभणशब्दादिभ्यइतिसूत्राच्च तथा
सर्वस्वप्नप्रपंचबाधेतत्साक्षिमात्रावशेषवत् नेहनानास्तिकिंचन अथातआदेशोनेतिनेतीत्यादिश्रुतिभिः प्र
तीतिमात्रसर्वप्रपंचबाधेयोवशिष्येतसोहमेवास्मि अंतर्भवेनंतभवंतमेवह्यतत्त्यजंतोमृगयंतिसंतः असंत-
मप्यंत्यहिमंतरेणसंतंगुणंतंकिमुयंतिसंतः श्रुतयस्त्वयिहिफलंत्यतन्निरसनेनभवन्निधनाः निःशेषशेषोजय
तादशेषएतावान्सर्ववेदार्थः शब्दआस्थायमांभिदा मायामात्रमनूद्यांतेप्रतिषिध्यप्रसीदतीत्यादिस्मृतिभ्यः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

निषेधे कृते नेति नेतीति वाक्यैः समाधिस्थितानां यदा भाति पूर्णं अवस्थात्रयातीतमद्वैतमेकं परं ब्रह्म नित्यं तदेवा हमस्मीत्यादि वचनाच्च ४६७ ननु त्वत्स्वरूपातिरिक्तं किंचिन्नास्ति चेत्किमिति प्रपंचो भाति न भाति चानंदविग्रहो भवानित्याशंक्याह ऋतेर्थमिति यद्विश्वमर्थं ऋते वस्तुतो नास्ति तद्यतः स्वरूपाज्ञानादात्मन्यधिष्ठाने प्रतीये त यच्च सच्चिदानंदानंतविग्रहं मत्स्वरूपं तद्यतो न प्रतीयेत्तदधिष्ठानस्यान्यथाभानहेतु विक्षेपशक्तिप्रधानं अधि ष्ठानमत्स्वरूपाभानहेतुभूतमावरणशक्तिप्रधानमज्ञानमात्मनो मम मायां विद्यात् तत्रार्थाभावेपि भाने दृष्टांतो य थाभासो द्विचंद्रादिः आवरणेनाधिष्ठानभगवत्स्वरूपाभाने दृष्टांतो यथा तमो राहुर्नक्षत्रमंडले वर्तमानोपि न

**ऋतेर्थं यत्प्रतीयेत न प्रतीयेत चात्मनि । तद्विद्यादात्मनो मायां यथाभासो यथा तमः ४६८**

प्रतीयते यद्वा तस्य स्वत एवाभानात्मकस्य नावरणकृत्यमतो यथा अतमः सूर्य्यो मेघाच्छन्नस्तन्मेघं विश्वं च भास यन्नपि स्वयं सामान्येन प्रकाशमानोपि न विशेषतो भाति पेचकादीनां स्वीयेनैव दिवांधत्वदोषेणावृत इव न भाति यद्वा यद्विश्वमर्थं ऋते तद्यतोऽज्ञानवशादात्मनि विश्वाधिष्ठाने प्रतीयेत अथ च सुषुप्तिप्रलयादौ कार णे लयेन स्वप्ने च कारणाज्ञानस्य प्रपंचांतराकारपरिणामेन क्षणे क्षणे चाज्ञानस्य पूर्वपूर्वभ्रमदृष्टसंस्कारो द्बो धेतत्तद्विषयांतराकारपरिणामेन ब्रह्मावबोधे तु सकारणबाधेन यत् विश्वं न प्रतीयेत तदज्ञानं तत्कार्य्यं चात्म- ७६

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नोममममायांविद्यात् तत्र दृष्टांतोयथाभासोरज्जुसर्प्पशुक्तिरजतादिचयद्वदर्थंऋतेप्रतीयेताथचान्यत्र प्रवृत्तौ
वादंडमालाभ्रकरंगादिभ्रमांतरोद्बोधेवाबाधेनवा न प्रतीयेतयथाचतमोनभोनीलिमाऋतेर्थंप्रतीयेततत्त
द्दिक्प्रांतेऽसंनिधानेप्रतीयमानोपितत्तद्देशागमनेनप्रतीयेततद्वत् यद्वाआत्मनिस्वप्नद्दशियथाभासः स्वप्नप्रपं
चोयथातमोनिद्राज्ञानंचार्थंऋतेप्रतीयेताथप्रबोधेनप्रतीयेतयश्चतदधिष्ठानमात्मासनप्रतीयेततथात्मनिम
यियद्विश्वंयतोऽज्ञानतमसःप्रतीयेताथचलयबाधादौनप्रतीयेततदधिष्ठानंमत्स्वरूपंचयद्यतोनप्रतीयेततद
ज्ञानमात्मनोममममायांविद्यात् तस्मादिदंजगदशेषमसत्स्वरूपंस्वप्नाभमस्तधिषणंपुरुदुःखदुःखं त्वय्ये
वनित्यसुखबोधतनावनंतेमायातउद्यदपियत्सदिवावभाति आत्मानमेवात्मतयाऽविजानतांतेनैवजातं-
निखिलंप्रपंचितं ज्ञानेनभूयोपिचसंप्रलीयतेरज्ज्वामहेर्भोगभवाभवौयथा अज्ञानसंज्ञौभवबंधमोक्षौद्वौ
नामनान्यौस्तऋतंज्ञभावात् अजस्रचित्यात्मनिकेवलेपरेविचार्य्यमाणेतरणाविवाहनी नचकथंमायावा-
दोत्रलिख्यते मायावादस्यासद्वादत्वप्रच्छन्नबौद्धत्वयोः स्मरणादितिवाच्यं तद्बोधकवाक्यस्यप्रामाण्यानि
श्चयात् मायायावादःकथनंमायावादस्तथाचतद्वाक्येपिमायोक्तिदर्शनात् स्यासद्वादत्वबौद्धत्वापादकस्यात्म
घातिनस्तस्यासद्वादत्वादेवशास्त्रांतरादूषकत्वापत्तेः किंचमायांतुप्रकृतिंविद्यान्मायिनंतुमहेश्वरमित्यादिश्रुतौ
दैवीह्येषागुणमयीममममायादुरत्यया संभवाम्यात्ममाययानाहंप्रकाशः सर्वस्ययोगमायासमावृतइत्यादिगी

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गुरु ७७ तायांएषामायाभगवतः सर्गस्थित्यंतकारिणीत्यादौश्रीमद्भागवते एवंसर्वत्र मायाशब्दप्रयोगदर्शनात्सर्वश्रु कौमुदी
तिस्मृतिपुराणेतिहासादिशास्त्रस्यासद्भादत्वापादनायप्रवृत्तंस्वयमपिमायाशब्दकथनेनमायावादात्मकंतद
वासद्भादनयात्यजेदेकंकुलस्यार्थेइतिन्यायेनहेयं नचमायायाजगत्कारणत्ववादएवमायावादइतिवाच्यं
उदाहृतश्रुतिस्मृत्यादौसर्वत्रतथोपलंभात् किंचतद्वाक्यस्यप्रामाण्येपिसर्वाविरुद्धोयमेवविचारोन्याय्यः
यथाब्रह्मसत्यत्ववादिनएवब्रह्मवादिनस्तथामायाकारणत्वस्यसर्वत्रश्रूयमाणस्यतत्तच्छास्त्रेभ्योनिःसा
रणासंभवात्सर्वप्रामाण्यास्वीकारेचनास्तिकत्वापत्तेर्येमायायाः सत्यत्ववादिनस्तएवतत्पक्षपातितयामा
यावादिनस्तेषांमतस्यैवपुनर्मिथ्याभूतमायायांसत्यत्वभ्रमेणासद्भादत्वंमायातत्कार्य्यसत्यत्वापादनेन
सर्ववेदांतप्रतिपाद्यस्य अथनित्योनिष्कलोनिराख्यातोनिर्विकल्पोनिरंजनः शुद्धोऽद्वितीयोनारायणोन
द्वितीयोऽस्तिकश्चिदित्यादिश्रुतिसिद्धाद्वैतस्यबाधनेनार्थात् बौद्धत्वेपिवाङ्मात्रेणवेदप्रामाण्यस्वीकारो
त्त्याप्रच्छन्नत्वंयोमांपश्यतिसर्वत्रसर्वंचमयिपश्यति तस्याहंनप्रणश्यामिसचमेनप्रणश्यतीति भगवतैवाप
रिच्छिन्नदृष्टीनांस्वनाशाभावोक्त्यापरिच्छिन्नमतीनांविषूलव्याप्तवित्यस्मात्सर्वव्यापकस्यविष्णोःसर्वतोना ७७
शेनैकत्रपरिच्छेदाभिमत्यास्वद्वैव्यत्वबोधनादतोमायासत्यत्ववादएवमायावादोनतन्मिथ्यात्ववादस्तेषां
तन्मिथ्यात्वापादनेनतदपवादकत्वात् ४६८ ६५ ६५ ६५

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ननु सर्वथाद्वैतप्रपंचस्य मायामात्रत्वेन मिथ्यात्वे यतो वा इमानि भूतानि जायंते येन जातानि जीवंति यत्प्रयंत्यभि संविशति आनंदाद्ध्येव खल्विमानि भूतानि जायंते तस्माद्वा एतस्मादात्मन आकाशः संभूत आकाशाद्वायुः अथ पुरुषो ह वै नारायणोऽकामयत प्रजाः सृजेयेति नारायणात्प्राणो जायते मनः सर्वेंद्रियाणि च खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणीत्यादिश्रुतिभिः जन्माद्यस्य यत इति सूत्राच्च कथं तत्कारणत्वेनैव ब्रह्म निरूप्यते तत्सृष्ट्वा तदेवानुप्रा[विश]दित्यादिना तत्प्रवेशोक्तिस्तत्राह यथा महांति भूतानीति यथा महांति भूतानि पंचीकृतमहाभूतानि उच्चावचेषु ब्रह्मादिस्तंबपर्य्यंतप्राणिदेहेषु ब्रह्मांडादिघटांतेषु च पटादिषु तंत्वादिवत्तत्सृष्ट्वा तदनुप्रविष्टानि प्रतीयंते तथापि

यथा महांति भूतानि भूतेषूच्चावचेष्वनु प्रविष्टान्यप्रविष्टानि तथा तेषु न तेष्वहं ४६९

वस्तुतो यथा सौम्यैकेन मृत्पिंडेन सर्वं मृण्मयं विज्ञातं स्याद्वाचारंभणं विकारो नामधेयं मृत्तिकेत्येव सत्यमित्यादिश्रुतिभ्यः पटादीनां तंत्वादिस्वरूपातिरेकेण पृथक्सत्वाभावादेव कस्मिन्प्रविष्टानि स्वीक्रियेरन्निति तदप्रवेशवत् प्राणिदेहानां ब्रह्मांडादेश्च महाभूतात्ममात्रत्वेन वस्तुतस्तत्पृथक्सत्वाभावात् स्पष्टं तथानुभवात् क्षित्यादीनामिहार्थानां छाया न कतमापि हि न संघातो विकारो वा न पृथक् नान्वितो मृषा इत्यादिवचनाच्चातस्तदभा[वा]देव कुत्र प्रविष्टाः स्युरित्यप्रविष्टान्येव तथा तेषु भूतेषु सच्चिदात्मनानुप्रविष्टतया भासमानोऽप्यहं सच्चिद्द्विवेचनेतद

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सत्वाभानापत्त्याधातवोवयविस्वाच्चतन्मात्रावयवैर्विना नस्युरसत्यवयविन्यसन्नवयवोंततः यआत्मनोदृश्य
गुणेषुसन्निति व्यवस्यते स्वव्यतिरेकतोऽबुधः विनानुवादंनचतन्मनीषितंसम्यग्यतस्त्यक्तमुपाददत्पुमानित्या
दिवचनैश्चतत्पृथक्स्वरूपानवस्थानादेवतेषुनाहंप्रविष्टः तदनुत्वंह्यप्रविष्टः प्रविष्टइवभाव्यसेव्याप्यव्यापक
तामिथ्यासर्वात्मेतिहिशासनादित्यादिवचनात् कारणत्वादिनानिरूपणंतुनैतन्मनोविशतिवागुतचक्षुरात्माप्राणें
द्रियाणिचयथानलमर्चिषःस्वाःशब्दोपिबोधकनिषेधतयात्ममूलमर्थोक्तिमाह यद्दतेननिषेधसिद्धिः यतोवाचो-
निवर्त्तंते अप्राप्यमनसासहेत्यादिनामनोवागगोचरस्यब्रह्मणःसाक्षाद्वक्तुमशक्यतयाअध्यारोपापवादाभ्यां

एतावदेवजिज्ञास्यंतत्त्वजिज्ञासुनात्मनः अन्वयव्यतिरेकाभ्यांयत्स्यात्सर्वत्रसर्वदा ४७०

निःप्रपंचंप्रपंच्यते अज्ञातजनबोधार्थंविद्वद्भिःकल्पितःक्रमइतिन्यायमाश्रित्यकारणत्वानुवादप्रतिषेधाभ्यांतत्त्व
रूपावबोधायैवइत्थंभावेनकथितोभगवान्भगवत्तमः नेत्थंभावेनहिपरंज्ञातुमर्हंतिसूरयः नास्यकर्मणिजन्मादौ
परस्यानुविधीयते कर्तृत्वप्रतिषेधार्थंमाययारोपितंहितत् इत्यादिवचनात् ननिरोधोनचोत्पत्तिर्नबद्धोनचसाध ७८
कः नमुमुक्षुर्नवैमुक्तइत्येषापरमार्थतेत्यादिश्रुत्यापरमार्थसृष्ट्यादिनिषेधाच्च ४६९ एवंज्ञानंपरमगुह्यंनिरूप्या
न्वयव्यतिरेकरूपयुक्त्यामननेनभेदभ्रमबाधपूर्वकंप्रत्यगभिन्नाद्वयब्रह्मैवजिज्ञास्यमित्याह एतावदेवेति

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आत्मनोयत्तत्वंपरमार्थस्वरूपंतज्जिज्ञासुनापुरुषेणएतावदेव जिज्ञास्यंअतोअन्यदार्तमित्यादिश्रुत्याततोन्य-
स्यमृषात्वेन जिज्ञास्यत्वाभावात् किंतदित्यपेक्षायामाह यस्यात्सर्वत्रसर्वदेति सर्वत्राकाशवायुतेजोबन्नांडभु
वन घटपटादिषुकारण तयासच्चिदानंदस्वरूपेण यदनुगतंतदुक्तंभगवत्पूज्यपादैः अस्तिभातिप्रियंरूपंनाम
चेत्यंशपंचकं आद्यंत्रयंब्रह्मरूपंजगद्रूपंततोद्वयमिति यदेवपुनःप्रत्यक्चैतन्यंसर्वदाजाग्रत्स्वप्नसुषुप्त्यवस्थासु
तत्तत्साक्षितयानुगतंतदन्वयव्यतिरेकाभ्यांजिज्ञास्यंअन्वयशब्देनात्रानुवृत्तिः व्यतिरेकशब्देनव्यावृत्तिः आका
शादिघटपटांतेषुसच्चिदानंदस्वरूपब्रह्मणः सर्वत्रान्वयस्तत्तन्नामरूपयोश्चमिथोव्यतिरेकः आकाशोस्तितथा
भातिप्रियोवायुस्तथैवसन् भातिप्रियस्तथातेजोबन्नंसद्भातितत्प्रियं ब्रह्मांडादिघटांतेषुसत्ताभानंप्रियंततं
ब्रह्मणोनामरूपंचनान्यस्यान्यत्रदृश्यते अस्तिभातिप्रियंनामरूपाभ्यांव्यतिरिच्यते अनुवृत्तेर्यथासूत्रंमणि-
भ्योभिद्यतेतथा नामरूपंचसद्भानप्रियाद्भिन्नंतथेष्यते व्यावृत्तत्वेनमणयोयथासूत्रादितिश्चैवं नामरूपात्मकं
विश्वमसद्भिन्नंसतोयतः अभानंभानभिन्नत्वादप्रियंप्रियभेदतः उक्तंभागवतेथापि असद्दुःखात्मकंजगत्स
च्चित्परानंदविग्रहोब्रह्मश्रीहरिः तस्मादिदंजगदशेषमसत्स्वरूपंस्वप्नाभमस्तधिषणंपुरुदुःखदुःखं त्वय्येव
नित्यसुखबोधतनावनंते मायातउद्यदपियत्सदिवावभाति योहंनावेदिषंकिंचिदस्वाप्संसुखतस्तदा दृष्टवान्वि
विधान्स्वप्नान्सोहंजागर्मितत्स्मरन् साक्षिप्रत्यक्चैतन्यानुवृत्तिरितिसर्वदा सर्वावस्थासुतासांतुमिथोव्यावृत्ति

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रेवहि स्वप्नेजागरणोऽलीकः स्वप्नोपिजागरेनहि द्वयमेवलये नास्तिलयोपिह्युभयोर्नच सत्यंसाक्ष्यनुवृत्तत्वात्
त्रिष्ववस्थासुशुक्तिवत् व्यावृत्तत्वान्मृषावस्थारूप्यरंगाभ्रकादिवत् त्रयआवसथात्रयः स्वप्नाइतिश्रुतीरणात्
जाग्रत्सुप्तीमृषास्यात्तामवस्थात्वाद्धिस्वप्नवत् जाग्रन्मृषैवजाग्रत्वात्स्वप्नजाग्रद्यथातथा सुप्तिर्मृषैवसुप्तित्वात्स्व
प्नदृष्टसुषुप्तिवत् जाग्रद्विश्वंमृषासर्वं विश्वत्वात्स्वप्नविश्ववत् बाध्यत्वंनह्युपाधिःस्यात्पक्षेसाधनव्याप्तितः ने
हनानास्तिश्रुतितोबाध्यत्वंतस्यनिश्चितं स्वप्नत्वंनह्युपाधिःस्यात्साधनव्याप्तितस्तथा त्रयःस्वप्नाइतिश्रुतेस्तत्रस्व
प्नत्वनिश्चयात् तयोस्तुव्यतिरेकेचैद्ध्युपाधिश्चित्स्वरूपता ब्रह्मणिसाध्यव्यापित्वात्पक्षेचतदसंभवात् साक्षी

## एतन्मतंसमातिष्ठ परमेण समाधिना

तुसर्वदासत्यंसाक्षित्वात्स्वप्नसाक्षिवत् सर्वत्रानुगतंब्रह्मसच्चिदानंदविग्रहं व्यावृत्तेभ्योनुवृत्तत्वाद्यन्मृषाभ्यो
विवेचितं तथासाक्ष्यनुवृत्तत्वाद्व्यावृत्ताभ्योविवेचितः सर्वाभ्योजाग्रदादिभ्योमृषाभ्यःसर्वदैवसत् अन्वयव्यति
रेकाभ्यांयस्यात्सर्वत्रसर्वदा ब्रह्मप्रत्यगभिन्नंतत्तत्वमस्यादिगोचरं एतावदेवजिज्ञास्यंतत्त्वजिज्ञासुनात्मनः इत्ये
वभगवत्पक्षःश्रीमद्भागवतामृतं ४७० एवंनिरूपितंस्वमतमुपसंहरंस्तदंगंनिर्दिशति एतन्मतमिति एतन्ममतं ७९
त्वंसमातिष्ठसम्यकृतत्रस्थिरोभवतादृक्स्थित्यैतदंगमाह परमेणसमाधिनेति समाधिशब्देनात्र योगःसचत्रि

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विधः कर्मयोगो भक्तियोगो ज्ञानयोगश्च योगास्त्रयो मया प्रोक्ता नृणां श्रेयोविधित्सया ज्ञानं कर्म च भक्तिश्च नो-
पायोन्योस्ति कर्हिचिदित्यादिवचनात् युज्यते भगवत्स्वरूपे अनेनेति योग इति व्युत्पत्त्या सर्वापेक्षा हि विद्या यज्ञा
दिश्रुतेरश्ववदिति न्यायेन सर्वेषां तेषां विद्यांगतया योगत्वं तत्र कर्मयोगस्त्रिविधः तत्राद्यः फलमनभिसंधाय स्ववर्णा
श्रमविहितधर्मानुष्ठानरूपः कर्मण्येवाधिकारस्ते मा फलेषु कदाचन मा कर्मफलहेतुर्भूर्मा ते संगोऽस्त्वकर्मणीत्यादिव
चनात् द्वितीयः सर्वकर्मणामीश्वरेऽर्पणं यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् यत्तपस्यसि कौंतेय तत्कुरुष्व
मदर्पणं कायेन वाचा मनसेंद्रियैर्वा बुद्ध्यात्मना वानुसृतस्वभावात् करोति यद्यत्सकलं परस्मै नारायणायेति समर्प
येतत् यदत्र क्रियते कर्म भगवत्परितोषणं ज्ञानं यत्तदधीनं हि भक्तियोगसमन्वितमित्यादिवचनात् तृतीयः क
र्तृत्वाद्यननुसंधायानुष्ठीयमानः प्रकृतेः क्रियमाणानि गुणैः कर्म्माणि सर्वशः अहंकारविमूढात्मा कर्ताहमिति
मन्यते तत्त्ववित्तु महाबाहो गुणकर्मविभागयोः गुणा गुणेषु वर्त्तंत इति मत्वा न सज्जत इत्यादिवचनात् सकाम-
कर्मणस्तु स्वर्गादिफलपरत्वेन भगवत्स्वरूपे अयोजकत्वादेव वेदविहितकर्मत्वेपि न कर्मयोगत्वं परोक्षवादो वेदो
यं बालानामनुशासनं कर्म्ममोक्षाय कर्म्माणि विधत्ते ह्यगदं यथेति न्यायेन तद्वाक्यानां फलेन प्रलोभ्य वैदिकप्रवृ-
त्त्या भगवत्पथसंमुखीकरणतात्पर्य्यवत्वे तु भवतु परंपरया संमुखीकारद्वारा कर्मयोगत्वं भक्तियोगश्च द्विविधः परा
ऽपरभेदात् तत्र परा तु सा परानुरक्तिरीश्वरे इति भगवता शांडिल्येन सूत्रिता ईश्वरे यानुरक्तिः सा परा भक्तिस्तु फल

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रूपा ब्रह्मभूतःप्रसन्नात्मानशोचतिनकांक्षति समःसर्वेषुभूतेषुमद्भक्तिंलभतेपरामित्यादिवचनान्नसाधनत्वेन
तस्याज्ञानोत्पत्त्यावंगत्वं द्वितीयानवधाश्रवणंकीर्तनंविष्णोःस्मरणंपादसेवनं अर्चनंवंदनंदास्यंसख्यमात्मनि
वेदनमित्यादिवचनात् सातुनिष्प्रत्यूहज्ञानसाधनंवासुदेवेभगवतिभक्तियोगःप्रयोजितः जनयत्याशुवैराग्यंज्ञा
नंयत्तदहैतुकं पुरेहभूमन्बहवोपियोगिनस्त्वदर्पितेहानिजकर्मलब्धया विबुध्यभक्त्यैवकथोपनीतयाप्रपे
दिरेंजोच्युततेगतिंपरां भक्त्यामामभिजानातियावान्यश्चास्मितत्वतः ततोमांतत्वतोज्ञात्वाविशतेतदनंतरं य
स्यदेवेपराभक्तिर्यथादेवेतथागुरौ तस्यैतेकथिताह्यर्थाःप्रकाशंतेमहात्मनः मद्भक्तिविमुखानांहिशास्त्रगर्तेषुमु
ह्यतां नज्ञानंनचमोक्षःस्यात्तेषांजन्मशतैरपीत्यादिवचनात् ज्ञानयोगोपिज्ञानस्यबहिरंगांतरंगभावेनद्विविधो-
विवेकादिःश्रवणादिश्च तत्राद्यश्चतुर्विधोनित्यानित्यवस्तुविवेकोवैराग्यंशमादिषट्संपत्तिर्मुमुक्षुताच तत्रापिप्रथ
मंत्वात्मैवनित्यंतदितरत्सर्वमनित्यमिति नजायतेम्रियतेवाविपश्चित् अतोन्यदार्तंतद्यथेहकर्मचितोलोकःक्षी
यतेएवमेवामुत्रपुण्यचितोलोकःक्षीयतेइत्यादिश्रुतेः नित्यमात्मस्वरूपंहिदृश्यंतद्विपरीतगंइतियानिश्चिताबु
द्धिर्विवेकोवस्तुनःसवैइत्याचार्योक्तेश्च द्वितीयमैहिकामुष्मिकविषयविरागः परीक्ष्यलोकान्कर्मचितान्ब्राह्मणो
निर्वेदमायान्नास्त्यकृतःकृतेनेत्यादिश्रुतेः ब्रह्मादिस्थावरांतेषुवैराग्यंविषयेष्वनुयथैवकाकविष्टायांवैराग्यं ८०
तद्धिनिर्मलमित्याचार्य्योक्तेश्च शमादिसंपत्तुषोढाशमोदमउपरतिस्तितिक्षाश्रद्धासमाधानताचशांतोदांतउपरत

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्तितिक्षुः समाहितोभूत्वात्मन्येवात्मानंपश्येदितिश्रुतेः शाखांतरेश्रद्धावित्तोभूत्वेतिपाठाच्च तत्रश्रवणादीतरविषये भ्योमनोनिरोधः शमःसदैववासनात्यागः शमोयमितिशब्दित इत्याचार्य्योक्तेः बाह्येंद्रियाणामपिततोनिरोधोद मः निग्रहोबाह्यवृत्तीनांदमइत्यभिधीयतेइतितद्वचनात् नचमनोनिग्रहेणैवालंकिमिंद्रियनिग्रहेणेतिवाच्यं इंद्रि याणिप्रमाथीनिहरंतिप्रसभंमनः इंद्रियाणांहिचरतांयन्मनोनुविधीयते तदस्यहरतिप्रज्ञांवायुर्नावमिवांभसी तिभगवद्वचनात् नचतर्हिदमेनैवालंकर्मेंद्रियाणिसंयम्ययआस्तेमनसास्मरन् इंद्रियार्थान्विमूढात्मामिथ्याचा रःसउच्यतेइतीश्वरोक्तेः निवर्तितानामिंद्रियमनसांश्रवणादीतरविषयेभ्यः स्वाभाविकोपरमणमुपरतिः तदुक्त माचार्य्यैः विषयेभ्यःपरावृत्तिः परमोपरतिर्हिसेति परमेतिपरावृत्तेर्विशेषणंस्वाभाविकीत्यर्थः केचिदुपरतिःसंन्या सइत्याहुस्तस्यतुजनकादौसाक्षात्तदभावेपिबोधदर्शनाद्वर्णाश्रमधर्म्मादिवज्जन्मांतरीयस्यापितस्यबोधेऽदृष्ट द्वारोपकारकत्वसंभवाद्ब्राह्मणेतरेषुमुखजानामयंधर्मोयद्विष्णोर्लिंगधारणं बाहुजातोरुजातानांनायंधर्म्मःप्रश स्यतेइत्यादिभिः तदनधिकारात् अश्वमेधंगवालंभंसंन्यासंपलपैत्रिकं देवराच्चसुतोत्पत्तिः कलौपंचविवर्जयेत् चत्वार्य्यब्दसहस्राणिचत्वार्य्यब्दशतानिचकलेर्यदागमिष्यंतितदात्रेतापरिग्रहः संन्यासश्चनकर्तव्योब्राह्मणेन- विपश्चितेत्यादिनासर्वकालिकत्वाभावाच्च नज्ञानांगचतुष्टयसाधनेष्वेवावश्यकांतर्भावइत्यत्राचार्य्यैरुपेक्षितं ज्ञानसाधनप्रवृत्तौप्रारब्धवशादागतदुःखैरनुद्वेगस्तितिक्षासहनंसर्वदुःखानांतितिक्षासाशुभामतेत्याचार्य्य

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वचनात् गुरुवेदांतवाक्येषुविश्वासः श्रद्धागुरुवेदांतवाक्येषुभक्तिश्श्रद्धेतिविश्रुतेत्याचार्य्योक्तेः अनेनैवतद्विज्ञा
नार्थंसगुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियंब्रह्मनिष्ठमितिश्रुतिसिद्धं गुरुलक्षणंतदुपसदनंचसूचितंश्रवणादौचि
त्तैकाग्र्यंसमाधानतादृश्यतेत्वग्र्यया बुद्ध्यासूक्ष्मयासूक्ष्मदर्शिभिरितिश्रुतेः सत्वात्संजायतेज्ञानमितिस्मृतेः प्रमा
दादितमोधर्मस्थौल्यरजोधर्मचांचल्यरहितसूक्ष्मैकाग्रबुद्ध्यैवबोधसंभवात् चित्तैकाग्र्यंतुसंलक्ष्येत्समाधानमि
तिस्मृतमित्याचार्य्यवचनाच्च प्रदीप्तशिरसोजलराशिंप्रतिप्रवृत्तिवत्संसारदुःखतप्तस्य ततोनवरतंमोक्षेच्छामुमुक्षुता
संसारबंधनिर्मुक्तिः कथंस्यान्मेकदाविधे इतियासुदृढाबुद्धिर्वक्तव्यासामुमुक्षुताइत्याचार्य्यवचनात् इतिबहिरंगं
द्वितीयस्तुत्रिविधः श्रवणमनननिदिध्यासनभेदात् आत्मावाअरेद्रष्टव्यः श्रोतव्योमंतव्योनिदिध्यासितव्यइति-
श्रुतेः सश्रवणादिस्त्वंतरंगंश्रवणादेर्ज्ञानांगत्वेपिमिथोप्यंगांगित्वंतत्रसर्ववेदांतानांप्रत्यगभिन्नाद्वयब्रह्मणिता
त्पर्य्यावधारणंश्रवणंकृत्यनधीनतयाविध्यनर्हत्वादात्मदर्शनस्याहार्थिकतव्यप्रत्ययेनात्मादर्शनार्हइतिसाक्षा
त्तद्दर्शनमुद्दिश्यविधानात् वेदांतप्रमाणगोचरत्वाच्चप्राधान्येनतस्यश्रवणस्यांगित्वंनानोपपत्तिभिस्तद्विचारात्म
कमननस्यतत्प्रमेयगतासंभावनानिरासकत्वात्तत्प्रमेयविषयकानवरतप्रत्ययप्रवाहात्मकनिदिध्यासनस्यचत
त्प्रमेयगतविपरीतभावनानिरासकत्वात्तत्फलोपकार्य्यंगत्वंनिदिध्यासनोपमर्द्याविपरीतभावनाद्विविधाद्वैतप्र
पंचस्यसत्यत्वरूपातद्ध्यानरूपाच तत्रप्रथमातुसादरनैरंतर्य्यकियत्कालाभ्यासेनापनीयतेतदपनयेएवजिज्ञा

सोर्विद्द्यवहारः संशयविपर्य्ययाप्रतिवन्द्वज्ञानत्वात् प्रपंचभानात्मकविपरीतभावनानिवृत्तौतुतद्ज्ञानंविना-
भोगासंभवात्स्वफलभोगायप्रारब्धंकर्मतत्प्रतिबध्नाति प्रारब्धकर्मणांविनश्यदवस्थायांतूत्तरक्षणेभोगप्रयोज
नाभावात्तत्प्रतिबंधक्षयेनिदिध्यासनोपकृतंतत्वज्ञानंसकारणलेशंतमपिभानप्रयोजकंविपर्य्यासंनिवर्त्तयति
भूयश्चांते विश्वमायानिवृत्तिरितिश्रुतेः तच्चनिदिध्यासनंद्विविधंयोगसाध्यंकेवलंचविक्षिप्तचित्तानांचित्तदर्पो
पशमपूर्वकतत्वाभिमुख्याययोगसाध्यंहरिगुरुभक्त्यातत्कृपालवेनस्वतएवतत्वाभिमुखचित्तानांतुकेवलं-
तच्चिंतनंतत्कथनमन्योन्यंतत्प्रबोधनं एतदेकपरत्वंचब्रह्माभ्यासंविदुर्बुधाइत्यादिवचनात् समाहितैःकिंकरणै
र्गुणात्मभिर्गुणोभवेन्मत्सुविविक्तधाम्नः विक्षिप्यमाणैरुतकिंनुदूषणं घनैरुपेतैर्विगतैरवेः किमित्यादिश्रीम
द्भागवतोक्तेश्च तदेतद्यावद्बलसाध्यंयोगः समाधिरित्यादिशब्दाभिधेयंततश्चस्वाभाविकंतुपरमः समाधिःप
राभक्तिरित्यादिशब्दाभिधेयंस्यात् देहाभिमानेगलितेविज्ञातेपरमात्मनि यत्रयत्रमनोयातितत्रतत्रसमाधयः
सर्वभूतेषुयः पश्येद्भगवद्भावमात्मनः भूतानिभगवत्यात्मन्येषभागवतोत्तमइत्यादिवचनैः तत्रदेहाभिमानेगलि
तेइत्यत्रदेहाभिमानशब्दोनामरूपमात्रोपलक्षणंप्रापंचिकनामरूपसत्यत्वभ्रमनिवृत्तौपरमात्मनिसर्वत्रसत्ताभा
नप्रियरूपेणानुगतेसच्चिदानंदविग्रहेकृष्णाब्रह्मणिविज्ञातेइत्यर्थः श्रीमद्भागवतवाक्येपि सर्वभूतेष्वात्मनोभग
वद्भावंभूतानिभगवत्यात्मनीत्युक्त्याप्रपंचस्यात्माव्यतिरेकोक्त्याबाधेनात्मभगवच्छब्दयोर्मुख्यसामानाधिकर

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ण्याञ्च प्रत्यगभेदेनाद्वैतमेवपर्य्यवसितं तथाचैवंविधेनपरमेणसमाधिनाऽऽतिष्ठसर्वस्यैतस्ययस्यास्तिभक्तिर्भग
वत्यकिंचनासर्वैर्गुणैस्तत्रसमासतेसुराः हरावभक्तस्यकुतोमहद्गुणामनोरथेनासतिधावतोवहिरित्यादिवच
नैः भगवद्भक्त्यधीनतयातस्याश्चभवापवर्गोभ्रमतोयदाभवेज्जनस्यतर्ह्यच्युतसत्समागमः सत्संगमोय
र्हितदैवसद्गतौपरावरेशेत्वयिजायतेमतिरित्यादिनासत्संगाधीनतयाममापिसाधूत्तमैर्योमत्संगलब्धयाभक्त्यै
वातिष्ठतत्फलमाह भवानिति तत्रस्थित्याभवान्कल्पविकल्पेषुकल्पस्यविविधसर्गेष्वपिमदैकात्म्यदृष्ट्याक
र्हिचिन्नविमुह्यति तत्रकोमोहः कःशोकः एकत्वमनुपश्यतइतिश्रुतेः नारायणपराराजन्कुतश्चनविभ्यति-

भवान्कल्पविकल्पेषुनविमुह्यतिकर्हिचित् ४७१

स्वर्गापवर्गनिरयेष्वपितुल्यार्थदर्शिनः इत्यादिवचनैर्निरयादिष्वपिनामरूपभेददृष्टेरेवदुःखभयहेतुतयात
दपबाध्ययः स्वर्गापवर्गनिरयेष्वपितुल्योर्थः सत्ताभानाद्यात्मकनारायणस्वरूपंतद्दर्शिनोतएवनारायणपरा-
स्तथाचद्वितीयाद्वैभयंभवतिभयंद्वितीयाभिनिवेशतः स्यादित्यादिश्रुतिस्मृतिवर्णितप्रत्यक्षानुभूतभयहेतुद्वि
तीयाभावान्नविभेतीतिभावः यावत्स्याद्गुणवैषम्यंतावन्नानात्वमात्मनः नानात्वमात्मनोयावदस्वातंत्र्यंतदै ९२
वहि यावदस्यास्वतंत्रत्वंतावदीश्वरतोभयं यएतत्समुपासीरंस्तेमुह्यंतिशुचार्पिता इत्यादिभिश्चगुणवैषम्य

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

निमित्तनानात्वभानेएवभयशोकमोहनिर्देशात् भक्तिज्ञानोपदेशेनब्रह्मणंविश्वमेवच योमूमुचद्धरिःस्वात्मा
तंवंदेस्वात्मनोगुरुं हृत्स्थोव्याख्यातवान्श्रीशोमन्मुखात्स्वमुखोद्भवं वेदांबुध्यमृतंस्वेष्टंतंस्वात्मानंगुरुंभजे ४७१
एवंसर्ववेदांतसारात्मकंब्रह्मणेनारायणोपदिष्टंश्रीमद्भागवतमुक्त्वाजप्यस्यतत्सारत्वमुच्यते सर्वेति तस्यभाग
वतस्यसारभूतार्थमिदंजप्यमेवनानकेनप्रकाशितमित्यनेननित्यसिद्धमेवप्रकाशितं नतुनवीनरचितमितिध्वनिः

सर्ववेदांतसारंयच्छ्रीमद्भागवतंखलु तत्सारंजप्यमेवेदंनानकेनप्रकाशितं ४७२ क
ल्याख्यरजनीरत्नगुरुचंद्रोदयस्तुयः तत्प्रभाऽमृतरूपेयंपापतापतमोपहा ४७३
हरिरूपंगुरुंवंदेनानकंतत्पदानुगान् रामसिंहंगुरुंवंदेब्रह्मबोधप्रदंस्वकम् ४७४

तं ४७२ रूपकेनमूलग्रंथस्वरूपंतत्फलंचोच्यते कल्याख्येति कलियुगाख्यातितमोव्याप्तत्वाद्धोरजनीतस्या
रत्नभूतोयस्तत्तमोभयहेतुत्वादिदोषनिवारकोगुरुरूपश्चंद्रस्तस्योदयः प्रादुर्भावस्तस्येयंप्रभा किंभूता अ
मृतरूपाब्रह्मस्वरूपानंदात्मकमोक्षरूपामृतस्याविर्भाविका तथासमस्तपापानामध्यात्मिकादितापानामज्ञा
नाख्यतमसश्चापहंत्रीच ४७३ गुरुकृपयैवग्रंथसमाप्तौ सर्वजनोद्धारायतद्व्याख्यात्यैगुरुप्रणामात्मकमंग
लंक्रियते हरिरूपमित्यादिचतुर्भिः हरिरूपमिति साक्षाद्भगवत्प्रादुर्भावंनानकमेवदशधाविर्भूतंगुरुंतत्पदा

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नुगांश्च प्रवृत्तनिवृत्तपथप्रवृत्तांस्तच्छिष्यवर्गान्वं देसाक्षा न्ब्रह्मबोधप्रदंरामसिंहंगुरुंचवंदे किंभूतंस्वकं स्वस्वरूपभूतंकंसुखंयस्मात् ४७४ हरिर्यथाश्रीमत्सदासुखस्वरूपश्चतथाबोधश्रीमंतंसदासुखंहरेः क्षीराब्धिशायित्ववन्निर्मलाख्यसंप्रदायरूपोयोनिर्मलाब्धिस्तत्रवर्तमानंसाक्षाद्धरिरूपंसर्ववेदतात्पर्य्यार्थाद्वितीयब्रह्मावबोधकत्वादेववेदमयंवेदार्थप्रतिकूलायेवादिनांकुतर्कास्तएवनीहाराः नीहारवद्वस्तुयाथात्म्यबोधप्रतिबंधकास्तेषांनिवर्तकंस्वविद्यागुरुंचवंदे ४७५ हरिमंत्रानुदेशकंहरिनाथगुरुंतथासवितुः प्रभयावाह्य

श्रीमत्सदासुखंवंदेनिर्मलाब्धिशयंहरिं सर्ववेदमयंवादितर्कनीहारहारकं ४७५ हरिनाथंगुरुंवंदेहरिमंत्रानुदेशकं साविच्याहृत्तमोघप्रभवानींदासकंगुरुं ४७६ सुचेतोरामराजानंतातंसन्मार्गदर्शकं क्षमाईमातरंविष्णोर्भक्तांगुरुपदानुगाम् ४७७

तमोनाशवत्साविच्रीगायत्रीतद्रूपयाप्रकृष्टभारूपयाहृदाकाशेतमोरूपो योघस्तंहंतीतितथातंभवानींदासकंगुरुंचवंदे ४७६ राजासुचेतरामाख्यंतातंस्वजनकंकिंभूतंसद्विष्णुस्तस्यमार्गःसमृग्यतेयेनतथाभूतंस्वगुरुहरिनाथोपदिष्टनिजेष्टमंत्रस्यदर्शकंउपदेष्टारं तथाक्षमाईस्वीयांमातरंतद्राज्ञींविष्णुभक्तांतदनुरागवतींगुरोः श्रीनानकस्यपदानुगांशिष्यांसाक्षात्दृष्टगुरुगोविंदसिंहपत्नीमातृसुंदरींचरणपंकजांवंदे ४७७



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एवंहरिगुरुचरणप्रणामपूर्वकंतच्चरणयोर्गुरुचंद्रोदयाभासकौमुदीसमर्प्यते हरिंगुरुमिति ४७८ वंदेश्रीना
नकंगुरुंश्रीहरिंदशरूपिणं विश्वोद्धारावतारंचकलितारंजगद्गुरुं १ रामसिंहंगुरुंवंदेहरिनाथंसदासुखं भवा

हरिंगुरुंप्रणम्याथतत्पादाब्जेसमर्प्पये गुरुचंद्रोदयाभासांकौमुदींतापहारिणीं ४७८
इतिश्रीचंद्रभागाख्यविष्णुसख्यापन्नश्रीरामनारायणहृत्कुमुदविकाशिकागुरुचंद्रोदय
कौमुदीसमाप्ता ❧ ❧ ❧ ❧ ❧ ❧

नीदासर्कतातंसुचेतोरामभूपतिं २ हरितत्वविदोभक्तान्साधून्विप्रान्हरेर्वपुः विश्वंश्रीशपदांभोजेखिमांव्या-
ख्यांसमर्प्पये ३ इतिश्रीचंद्रभागाख्यविष्णुसख्यापन्नश्रीरामनारायणविरचितंगुरुचंद्रोदयकौमुदीभासितार्था
नुवर्णनंव्याख्यानंसंपूर्णम् ❧ ❧ ❧ ❧

उदासीनाहीनागुरुकुलभवालोभमदतः सदाशांतादांताहरिहररतायोगनिरताः विशिष्टावैशिष्टास्शुभगुणगणैर्मोक्षहितकैः श्रुताः सिद्धाऽऽभ्रऽञ्जाजप
ध्रतबलाः सत्वनिवराः १ श्रीमद्गुरुपतिख्याताः सिंधुदेशेहिते ऽभवन् तेषांसंगतिदासाख्याः शिष्योवरगुणोज्ज्वलः २ तेनमुद्रापितोग्रंथः मुंबापुर्यां
शिलाक्षरैः जगदीशोशिलायंत्रेशुभंभूयात्प्रवर्त्तितः ३ श्रीमद्ब्रह्मप्रकाशाख्याउदासीनाहिविश्रुताः तच्छिष्यजयरामेणशोधितोबहुयत्नतः ४
[illegible]त्वाल्लेखकस्याप्यबोधतः अस्मच्छीघ्रप्रमादेनाशुद्धंशोध्यंबुधैःखलु ५ भ्रांतेःपुरुषधर्मत्वादनुचितंयदत्रवै विद्वद्भिस्तत्त्वसोढ-
[illegible] संवत [illegible]४१ पौषमासः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गुरु नुगांश्चप्रवृत्तनिव वत्तां र्न्वं देसाक्षा

इति श्री सटीकगुरुचंद्रोदयकौमुदीसमाप्ता

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

